अस्मात् परतरो नास्ति सिद्धिमन्त्रो गणेश्वरि ।
नक्तंभोजी हविष्यान्नो जपेद् विद्यां दिवा शुचिः ॥ १७ ॥
तत्कृत्वा सिद्धिमाप्नोति जपेच्च मनसा स्थिरम् ।
भूमौ शयीत तत्काले त्यजेच्च युवतीं दिवा ॥ १८ ॥
प्रातर्जपं प्रकुर्वीत मुखं शुद्ध्यति तत्परम् ।
हविष्यान्नं च संभुज्य ब्रह्मपुष्पं हुनेदथ ॥ १९ ॥
जपकाले महेशानि भार्यां यत्नेन वर्जयेत् ।
विष्णुकल्पं वर्जयेत् तु तुलसीं च विवर्जयेत् ॥ २० ॥
वर्जयेन्मालतीपुष्पमन्यदेवप्रपूजनम् ।
हस्तप्रक्षालनं शौचमाचारं भक्तिमांश्चरेत् ॥ २१ ॥
देवीनां च तथा पुष्पं पृथक्पात्रे नियोजयेत् ।
एकीभावं हि कर्तव्यं यदीच्छेच्छुभमात्मनः ॥ २२ ॥
नैवेद्यादि फलैस्तोयैर्जानीयादेव एकभाक् ।
हविर्नानाविधैर्गन्धैः पायसैर्मोदकादिभिः ॥ २३ ॥
एवं क्रमेण भुञ्जीत दधि क्षीरं तथैव च ।
मालानां च महेशानि नियमं शृणु भैरवि ॥ २४ ॥
अकस्मादीहिता सिद्धिर्महाशङ्खाख्यमालया ।
पञ्चाशन्मणिभिर्माला निर्मिता सर्वकामदा ॥ २५ ॥
युद्धे मृतस्य देवेशि चाण्डालस्यास्थिकेन च ।
मस्तकस्य विशेषेण महाशङ्खः प्रकीर्तितः ॥ २६ ॥
अनया मालया देवि तारामन्त्रः प्रसिद्ध्यति ।
तत्संस्कारं वरारोहे शृणुष्वैकमनाः प्रिये ॥ २७ ॥
सूत्रेण ग्रथिता माला विप्रस्त्रीसूत्रनिर्मिता ।
पट्टसूत्रैः कृता माला जगद्वश्याय कल्पते ॥ २८ ॥

स्वर्णसूत्रकृता माला साक्षाद्वैश्रवणो भवेत् ।
मुखे मुखं तु संयोज्य पुच्छे पुच्छं नियोजयेत् ॥ २९ ॥
गोपुच्छसदृशी माला यद्वा सर्पाकृतिर्भवेत् ।
मातृकावर्णसंमिश्रैर्ग्रन्थि कुर्याद् विधानतः ॥ ३० ॥
तत्सजातीयमेकाक्षं मेरुत्वेन प्रकल्पयेत् ।
एवं क्रमेण ग्रथिता माला सर्वत्र शोभना ॥ ३१ ॥
एवं सा ग्रथिता माला मन्त्रसिद्धिप्रदायिनी ।
एकैकं मणिमादाय ब्रह्मग्रन्थि विनिर्दिशेत् ॥ ३२ ॥
अनुलोमविलोमेन मातृकान्तर्गतं जपेत् ।
तेन सर्वगुणोपेता जायते सिद्धिभागिति ॥ ३३ ॥
कुल्लुकां च ततो नत्वा मालापूजां विधाय च ।
गृह्णीयाद् दक्षिणेनाथ नच वामेन संस्पृशेत् ॥ ३४ ॥
नाभितश्च शिरोदेशे कुल्लुकां परिकल्पयेत् ।
पट्टसूत्रकृता माला देव्याः प्रीतिकरी सदा ॥ ३५ ॥
अभावे चापि शङ्खस्य स्फाटिक्या मालया जपेत् ।
मालाविशेषं देवेशि भैरवि प्राणवल्लभे ॥ ३६ ॥
यया जप्तेन देवेशि सिद्धो भवति तत्क्षणात् ।
अनया सदृशी विद्या त्रैलोक्ये नास्ति सुन्दरि ॥ ३७ ॥
कृपया परमेशानि तव स्नेहात् प्रकाश्यते ।
परमं शृणु चार्वङ्गि शृणु पार्वति तत्त्वतः ॥ ३८ ॥
येन विज्ञानमात्रेण मन्त्राः सिध्यन्ति तत्क्षणात् ।
अनुलोमविलोमेन मन्त्रमा( न्तर्विर्भे ? त्रार्सभे )दतः ॥ ३९ ॥
मन्त्रेणान्तरितान् वर्णान् वर्णेनान्तरितं मनुम् ।
कुर्यान्मन्त्रमयीं मालां सर्वमन्त्रप्रदीपनीम् ॥ ४० ॥

चरमार्णं मेरुरूपं न लङ्घयेच्च सर्वदा ।
एतत्परं रहस्यं च मयोक्तं ते यशस्विनि ॥ ४१ ॥
त्वया गुप्ततरं कार्यं नाख्येयं यस्य कस्यचित् ।
शुभे काले शुभे लग्ने शुभर्क्षे च शुभे तिथौ ॥ ४२ ॥
प्रतिष्ठां कारयेद्विद्वान् स्वयं वा गुरुणापि वा ।
अश्वत्थपत्रनवकं पद्माकारेण पातयेत् ॥ ४३ ॥
तत्र संस्थापयेन्मन्त्री मातृकामन्त्रमुच्चरेत् ।
वह्निं संस्कृत्य देवेशि हुनेत् सुरगणार्चिते ॥ ४४ ॥
हुतशेषं प्रतिहुतौ प्रदद्याद् देवताधिया ।
तत्र देवीं समभ्यर्च्य ग्रहणेऽपि च पूजयेत् ॥ ४५ ॥
अनुलोमविलोमेन मातृकार्णेन मन्त्रयेत् ।
मेरुं प्रेतेन संमन्त्र्य तां नयेद् देवतात्मताम् ॥ ४६ ॥
एवं सर्वगुणोपेता जायते सर्वसिद्धये ।
स्मृतिसूत्रं वीतिहोत्रमावृत्तित्रितयं ततः ॥ ४७ ॥
दिवानिशाकरौ प्रोक्तौ तस्मात्तेजस्त्रयी शुभा ।
गोप्तव्या ह्यनिशं सूत्रे जपमालेऽसितापये ॥ ४८ ॥
मातृमेयप्रमाणेन बिन्दुनादकलात्मिकाम् ।
उच्चरेदनुसंस्कृत्य कुण्डलीयोगतः प्रिये ॥ ४९ ॥
तेन विद्या लभेत् सिद्धिं नात्र कार्या विचारणा ।
कण्ठदेशे स्थिता मन्त्राः केवला वर्णरूपिणः ॥ ५० ॥
सौषुम्णाध्वन्युच्चरिताः प्रभुत्वं प्राप्नुवन्ति हि ।
ईदृश्या च स्रजा यस्तु कुरुते जपमुत्तमम् ॥ ५१ ॥
अपमृत्युकलिभ्यां च मुच्यते नात्र संशयः ।
अथ वक्ष्ये महेशानि अङ्गुलीनां च निर्णयम् ॥ ५२ ॥

पर्वद्वयमनामायाः परिवर्तेन वै क्रमात् ।
पर्वत्रयं मध्यमायास्तर्जन्येकं समाचरेत् ॥ ५३ ॥
शक्तिमाला समाख्याता सर्वमन्त्रप्रदीपनी ।
व्यग्रचित्तेन यज्जप्तं यज्जप्तं मेरुलङ्घने ॥ ५४ ॥
तत्सर्वं निष्फलं याति इत्याहुः परमेश्वरि ।
पर्वद्वयं हि तर्जन्या मेरुं तद्विद्धि पार्वति ॥ ५५ ॥
सिद्धये साधको जप्यान्मेरुं नत्वा पुनः पुनः ।
तर्जन्यग्रं तथा मध्यं यो जपेत् सोऽपि पापकृत् ॥ ५६ ॥
नित्यं जपं करे कुर्यान्नतु काम्यं कदाचन ।
कुल्लुकां च ततो नत्वा मालापूजां विधाय च ॥ ५७ ॥
श्रीगु[रु?रो]श्वर[णं?णौ]ध्यात्वा मालाया मन्त्रमुच्चरेत् ।
कुल्लुकां च न जानाति महामन्त्रं जपेन्नरः ॥ ५८ ॥
पञ्चत्वं जायते तस्य अथवा वातुलो भवेत् ।
तारिणीचण्डिकायाश्च मन्त्रः कुल्लुकवर्जितः ॥ ५९ ॥
मतिमान् यो द्विजातीनां नोपादेयः कथञ्चन ।
कुल्लुकां शिरसि धृत्वा सर्वयज्ञफलं लभेत् ॥ ६० ॥
नान्यो विचारः सर्वत्र विरूपाक्षस्य संमतः ।
कुल्लुके वर्जिते पुंसां यद्यनोपस्थितिर्भवेत् ॥ ६१ ॥
मम पूजा सदा व्यर्था मम यज्ञस्तथैव च ।
तारामन्त्रस्य जानीयात् त्र्यक्षरं मन्त्रमुत्तमम् ॥ ६२ ॥
न जानाति च यो मूढः कुल्लुकां तारिणीं जपेत् ।
यावज्जीवं महेशानि न सिद्ध्यति कदाचन ॥ ६३ ॥
महामन्त्रं परित्यज्य पूजयेद्यस्तु तारिणीम् ।
पञ्चत्वं जायते तस्य अथवा वातुलो भवेत् ॥ ६४ ॥

१ 'मूढकीलकः' ख पाठः ।

कुल्लुका नाम सा देवी अनुभावस्वरूपिणी ।
सवामकर्त्रिहस्ता च चतुर्बाहुसमन्विता ॥ ६५ ॥
नीलोत्पलवपुः श्यामा सर्वालङ्कारभूषिता ।
लिखेत् तत् त्र्यक्षरं मन्त्रं हरिद्राचन्दनेन वा ॥ ६६ ॥
यावज्जीवं तु मन्त्रार्णं शिखायां धारयेत् सदा ।
महतीविद्यया प्राप्तं जपेन्मन्त्रं त्रिलक्षकम् ॥ ६७ ॥
लक्षमेकं जपेद्विद्यां हविष्याशी जितेन्द्रियः ।
उ(च्छ?च्च)स्थानेषु देवेशि तदासनस्य संस्थितिः ॥ ६८ ॥
पूर्वोक्तं पूजनं कृत्वा विप्राराधनतत्परः ।
अनन्तरं दशांशेन क्रमाद्धोमादिकं चरेत् ॥ ६९ ॥
जपान्ते प्रत्यहं मन्त्री होमयेत् तद्दशांशतः ।
तर्पणं चाभिषेकं च तत्तद्दशांशतो मनोः ॥ ७० ॥
प्रत्यहं भोजयेद् विप्रान् न्यूनाधिक्यप्रशान्तये ।
अथैवं सर्वसंपूर्णं होमादिकमथाचरेत् ॥ ७१ ॥
रात्रौ बलिः सम(दाय?र्प्यस्तु)सर्वसिद्धिमभीप्सुभिः ।
विना दीपकमन्त्रेण अग्रे शून्यं न चार्चयेत् ॥ ७२ ॥
विनानया महादेवि विना रुधिरवेदनैः ।
त्रिवर्णमय्या दीपन्या मन्त्रिणी सा च कथ्यते ॥ ७३ ॥
मन्त्रार्थं मन्त्रचैतन्यं योनिमुद्रां न वेत्ति यः ।
शतकोटिजपेनापि कथं सिद्धिर्वरानने ॥ ७४ ॥
गुप्तजीवाश्च ये मन्त्रा न दास्यन्ति फलं प्रिये ।
मन्त्राश्चैतन्यसहिताः सर्वसिद्धिकराः सदा ॥ ७५ ॥
मन्त्रोच्चारे कृते यादृक् स्वरूपप्रथ(मं?नं)भवेत् ।
शते सहस्रे लक्षे वा कोटिजापे न तत्फलम् ॥ ७६ ॥

हृदये ग्रन्थिभेदश्च सर्वावयवभेदनम् ।
आनन्दाश्रूणि पुलको देहावेशः कुलेश्वरि ॥ ७७ ॥
गद्गदोक्तिश्च सहसा जायते नात्र संशयः ।
सकृदुच्चारिते चैवं मन्त्रे चैतन्यसंयुते ॥ ७८ ॥
दृश्यते च महादेवि पारंपर्यं तदुच्यते ।
एवं जपं यथा कृत्वा दशांशमसितोत्पलैः ॥ ७९ ॥
आज्याक्तैर्जुहुयान्मन्त्री तद्दशांशेन तर्पणम् ।
कालागुरुद्रवोपेतैर्विमलैर्गन्धवारिभिः ॥ ८० ॥
तर्प(येत्) तां परां देवीं तत्प्रकारमिहोच्यते ।
जले चावाह्य विधिवत् पाद्याद्यैरुदकात्मकैः ॥ ८१ ॥
संपूज्य विधिवद् देवीं परिवारान् सकृत्सकृत् ।
संतर्प्य विधिवद्भक्त्या दशांशं तर्पयेत ततः ॥ ८२ ॥
पुनरेकैकं संतर्प्य परिवारांस्तथा पुनः ।
तारिणीमभिषिञ्चामि नमो मूर्ध्नि त्रिनिःक्षिपेत् ॥ ८३ ॥
अभिषेकोऽयमाख्यातः सर्वपापनिकृन्तनः ।
अभिषेकदशांशेन साधकानां च भोजनम् ॥ ८४ ॥
सुवासिनीं कुमारीं च भोजयेत् तदनन्तरम् ।
क्षीरखण्डाज्यभोज्यैश्च मन्त्रसिद्धिर्भवेद् ध्रुवम् ॥ ८५ ॥
गुरवे दक्षिणां दद्याद् बहुमानपुरःसरम् ।
होमतर्पणयोः स्वाहा न्यासपूजनयोर्नमः ॥ ८६ ॥
मन्त्रान्ते नाम चोच्चार्य तर्पयामि ततः परम् ।
स्वाहान्ते तर्पणं त्वेवमभिषेकं शृणुष्व मे ॥ ८७ ॥
मन्त्रान्ते नाम चोच्चार्य सिञ्चामीति पदं ततः ।
तद्दशांशं ब्राह्मणानां भोजनं च समाचरेत् ॥ ८८ ॥

इत्येवं सिद्धमन्त्रः सन् सर्वान् कामांश्च साधयेत् ।
बिल्वपत्रं महेशानि दशांशं जुहुयात् ततः ॥ ८९ ॥
अथ चैवं तिलाज्येन होमयेद्वाथ सुन्दरि ।
सर्वस्वं गुरवे दद्यात् तदर्धं वा तदर्धतः ॥ ९० ॥
अज्ञात्वा कुल्लुकां देवीमजप्त्वा गुरुपादुकाम् ।
न दत्त्वा दक्षिणां सम्यगकृत्वा चक्रपूजनम् ॥ ९१ ॥
योऽस्मिंस्तन्त्रे प्रवर्तेत तत्स्वं पीडयते ध्रुवम् ।

श्रीदेव्युवाच ।

कथितं परमेशान परदारविधौ मयि ।
न पापं जायते सुभ्रु परदारविधौ मम ॥ ९२ ॥
परस्य दारान् संस्पृश्य जप्यते यदि साधकैः ।
तदैव महती सिद्धिर्नात्र कार्या विचारणा ॥ ९३ ॥
कालीकल्पप्रकाशे च कथितं यन्महेश्वर ।
अत्रैव सम्यगाख्यानं कुरुष्व हृदयप्रिय ॥ ९४ ॥

श्रीभैरव उवाच ।

शृणु देवि महाभागे आपदुद्धारकारिणि ।
अकथ्यं यन्महादेवि तव स्नेहात् प्रकाश्यते ॥ ९५ ॥
परदारविधौ वेदनिन्दावादः प्रवर्तते ।
तासां सङ्गान्महेशानि तामिस्रं नरकं भवेत् ॥ ९६ ॥
वेदार्थमिति विज्ञाय कथं कुर्याच्च साधकः ।
परदारान् नैव गच्छेद्, गच्छञ्जपेच्चेति वेदः ॥ ९७ ॥
श्रुतिद्वयविरोधित्वाद्गच्छेरन् परयोषितः ।
तस्माच्छृणु वरारोहे वेदार्थं कथयामि ते ॥ ९८ ॥

श्रीदेव्युवाच ।

को वेदः कुत आयाति को वा तस्य प्रकाशकः ।
कः कर्ता तस्य वेदस्य तत्सर्वं कथयस्व मे ॥ ९९ ॥
श्रीभैरव उवाच ।
एको वेदश्चतुर्धाभूद् यजुःसाम–ऋगादयः ।
वेदो ब्रह्मेति साक्षाद्वै जानेऽहं नगनन्दिनि ॥ १०० ॥
स्वयं प्रवर्तते वेदस्तत्कर्ता नास्ति सुन्दरि ।
स्वयंभूरीशो भगवान् वेदो गीतस्त(या?था)पुरा ॥ १०१ ॥
शिवाद्या ऋषिपर्यन्ताः स्मर्तारोऽस्य न कारकाः ।
प्रकाशका भवन्त्येते कृष्णाद्यास्त्रिदिवौकसः ॥ १०२ ॥
वैदिकप्रतिपाद्यश्च अर्थो धर्मः प्रकीर्तितः ।
विपरीतं महेशानि अधर्मो भवति प्रिये ॥ १०३ ॥
परदारागमं वेदे तन्निषिद्धं सुरेश्वरि ।
यद्धि वैधेतरं देवि तन्निषिद्धं महेश्वरि ॥ १०४ ॥
परस्त्रियं महेशानि मनसा भावयञ्जपेत् ।
तदैव सर्वसिद्धिः स्यान्नात्र कार्या विचारणा ॥ १०५ ॥
इति सिद्धान्तविद्भिश्च ज्ञेयं तन्त्रोपदेशिकम् ।
महाचीनद्रुमलतावेष्टनेन च यत्फलम् ॥ १०६ ॥
तत्फलं नास्ति देवेशि त्रैलोक्ये सुरवन्दिते ।
यस्मिन् मन्त्रे य आचारस्तत्र धर्मस्तु तादृशः ॥ १०७ ॥
कृतार्थस्तेन जायेत स्वर्गो वा मोक्ष एव च ।
भ्रान्तिरत्र न कर्तव्या सिद्धिर्भवति निश्चितम् ॥ १०८ ॥
तस्मादनेन देवेशि पापं नास्ति महेश्वरि ।
तस्मात् कुर्यात् साधकेन्द्रः परदारागमं शुभे ॥ १०९ ॥
अथान्यत् संप्रवक्ष्यामि मन्त्रसिद्धेश्च लक्षणम् ।
मातृकापुटितं कृत्वा स्वमन्त्रं प्रजपेत् सुधीः ॥ ११० ॥

क्रमोत्क्रमाच्छतावृत्त्या तदन्ते केवलं मनुम् ।
एवं तु प्रत्यहं जप्याद् यावल्लक्षं समाप्यते ॥ १११ ॥
निश्चितं मन्त्रसिद्धिः स्यादित्युक्तं तन्त्रवेदिभिः ।
पुरश्चर्याशतेनापि प्रयोगविधिना तथा ॥ ११२ ॥
कल्पकोटिजपेनापि पूजायाः शतकेन च ।
न सिद्धिर्जायते सुभ्रु!यदि भावो न जायते ॥ ११३ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे ( पुरश्चर्याविधिनिरूपणं)
चतुर्थः पटलः ॥ ४ ॥

अथ

पञ्चमः पटलः ।



श्रीभैरव उवाच ।
नित्यार्चनरतो मन्त्री कुर्यान्नैमित्तिकार्चनम् ।
नैमित्तिकार्चने सिद्धिः कुर्यात् काम्यमखण्डितम् ॥ १ ॥
मासार्धमथवा मासं द्विगुणं त्रिगुणं तथा ।
यावत्फलाप्तिभार्ग् योगी तावदेवं समाचरेत् ॥ २ ॥
नैमित्तिके च काम्ये च फलाप्तिर्मण्डलावधिः ।
नचेत्तु द्विगुणीकृत्य यथा स्यात् फलभाक् सुधीः ॥ ३ ॥
अष्टम्यां च चतुर्दश्यां पूजयेच्च प्रयत्नतः ।
यद्यत् प्रार्थयते मन्त्री तत्तदाप्नोति नित्यशः ॥ ४ ॥

१ 'सर्वान्' ख. पाठः ।

लभते मञ्जुलां वाणीमष्टम्यां च ततो जपेत् ।
मध्याह्नसमये देव्याः पूजनं सिद्धिदायकम् ॥ ५ ॥
प्रातःकाले महादेवि पूजा कार्या विधानतः ।
सायाह्ने च महादेवि पूजा च शस्यते बुधैः ॥ ६ ॥
अष्टम्यां पूजनं देव्याः सर्वकामफलप्रदम् ।
रम्भापुष्पं बीजपूरं सुगन्धिपरिमिश्रितम् ॥ ७ ।
मिश्रीकृत्य बलिं दद्यादष्टम्यां च विशेषतः ।
स्वर्णमालां महादेव्यै दद्याद् गन्धैर्विशेषतः ॥ ८ ॥
फलं क्षीरं तथा दद्यादधिकं शर्करान्वितम ।
तस्मात् सर्वप्रयत्नेन संपत्त्यै पूजयेच्छिवाम् ॥ ९ ॥
सूक्ष्मतण्डुलसिद्धार्थान् देव्यै दद्यात् प्रयत्नतः ।
अष्टम्यां च चतुर्दश्यां पूजयेच्च यथाविधि ॥ १० ॥
आज्ञासिद्धिमवाप्नोति ज(वा?पा)पुष्पं च बर्वराम् ।
चन्दनं चार्ककुसुमं दद्यात् श्वेतापराजिताम् ॥ ११ ॥
अर्घ्यं दद्याद्विशेषेण नित्यपूजा(च?सु) सर्वदा ।
अष्टोत्तरशतं जप्यं यावज्जीवितसंख्यया ॥ १२ ॥
यस्तु संपूजयेद् दुर्गां महाष्टम्यां प्रयत्नतः ।
स त्रिजन्मार्जितं पापं तत्क्षणादेव नाशयेत् ॥ १३ ॥
ये जपन्ति महामायां ज्ञात्वा तत्त्वेन भैरवम् ।
मधुना पायसं चैव क्षीरमाज्यं च शर्कराम् ॥ १४ ॥
बलिं दद्याच्च गोधां वै चासवं च प्रशस्यते ।
अत्रासवमवश्यं च ब्राह्मणस्तु विशेषतः ॥ १५ ॥
आसवं च महेशानि शृणुष्वैकमनाः प्रिये ।

श्रीभैरव्युवाच ।

भगवन् सर्वधर्मज्ञ सर्वशास्त्रागमादिषु ।
केन रूपेण देवेश दद्याद् विप्रोऽथ चासवम् ॥ १६ ॥
विशेषं कथयस्वाग्रे सारात् सारतरं यतः ।
कैतवं च परित्यज्य यदि स्नेहोऽस्ति मां प्रति ॥ १७ ॥
केन पेयमासवं च केनापेयं वदस्व मे ।
अपेयं तन्महाबाहो पेयं वा तद्वदस्व मे ॥ १८ ॥
यस्मान्मे परमेशान दूरीभवति संश(व?यः) ।
कोटीनां तिसृणां देवि तन्त्राणां सारमुत्तमम् ॥ १९ ॥
तस्मादत्र प्रकथ्यं ते सत्यं सुरगणार्चित ।

श्रीभैरव उवाच ।

शृणु देवि महाभागे सर्वशास्त्रार्थगामिनि ।
जिज्ञासितं परं तत्त्वं तन्मे निगदितं शृणु ॥ २० ॥
"मद्यमदेयमपेयमनिर्ग्राह्यं चेति, जपे देयं चेति ।"
सुरा वै मलं सत्त्वानां पाप्मा तु मलमुच्यते ।
तस्माद् ब्रह्मणराजन्यौ वैश्यश्च न सुरां पिबेत् ॥ २१ ॥
अस्यां शृणु वरारोहे सुरां सुरगणार्चिताम् ।
गौडी पैष्टी तथा माध्वी विज्ञेया त्रिविधा सुरा ॥ २२ ॥
पातव्या हि महाभागे नतु कैश्चित् द्विजोत्तमैः ।
पनसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् ॥ २३ ॥
माक्षिकं तालमा(ध्वि?ध्वी)कं मैरेयं नारिकेलजम् ।
समान्येव विजानीयान्मद्या(न्ये?न्ये)कादशैव तु ॥ २४ ॥
सुरापानविधौ देवि निन्दा केषां च संमता ।
विशेषं शृणु देवेशि तव स्नेहात् प्रकाश्यते ॥ २५ ॥

तन्निषिद्धा महादेवि या च वैधेतरा भवेत् ।
अमन्त्रितसुरापाने प्रायश्चि(तो?त्तं) विधीयते ॥ २६ ॥
शृणु देवि महाभागे पुरावृत्तं मनोहरम् ।
शुक्रो दैत्यगुरुः पू(वें?र्वं) सिद्ध्यर्थं कृतवाञ्जपम् ॥ २७ ॥
कल्पकोटिजपेनापि नासिद्ध्यत कदाचन ।
पीत्वासवं महादेवि प्रत्यहं जपतत्परः ॥ २८ ॥
चित्तोन्मादं तदा तस्य जातं परमकौतुकम् ।
जपभ्रष्टोऽभवत्तत्र सस्मार वनितां शुभाम् ॥ २९ ॥
तथोर्वशी च स्वर्वेश्या तत्र गत्वा मनोरमम् ।
वाक्यं सर्वरसस्वादु कथयित्वा सुशोभने! ॥ ३० ॥
शुक्रेण सार्धं देवेशि रमयामास चोर्वशी ।
शुक्रोत्पत्तिश्च जायेत ज्ञानं य(ज)ज्ञे ततः परम् ॥ ३१ ॥
तत्त्वं ज्ञात्वा ततः शुक्रः शशापासवमुत्तमम् ।
तेन शापेन देवेशि शप्तं चासवमुत्तमम् ॥ ३२ ॥
ततः प्र(भू?भृ)ति तद् देवि सिद्धये नच जायते ।
एवं क्रमेण देवेशि शतवर्षं गतं प्रिये ॥ ३३ ॥
ततः सा च भगवती काली कालस्वरूपिणी ।
उवाच सादरं वाक्यं काली दैत्यगुरुं प्रति ॥ ३४ ॥
शृणु वत्स महद्वाक्यं सावधा(ना?नो)ऽवधारय ।
कथं शप्तं महाभाग चासवं देवदुर्लभम् ॥ ३५ ॥

श्रीशुक्र उवाच ।

सर्वेशे सर्वभूतेशे सर्वभूतसमावृते ।
ब्रह्मेशविष्णुनमिते प्रणमामि सदा शिवे ॥ ३६ ॥
ब्रह्मविष्णुशिवानां च प्रसूते करुणामयि ।
जडानां ज्ञानदे देवि त्राहि मां शरणागतम् ॥ ३७ ॥

तारिणी त्वं महादेवि चात्र पूर्णा युगागमे ।
अस्माकं ज्ञानदात्री च विष्णुमातर्नमोऽस्तु ते ॥ ३८ ॥
त्वं श्रीस्त्वं (हि?चैव)सावित्री सती च त्वं सुरेश्वरि ।
आद्ये भवाद्ये सर्वेशे विश्वमातर्नमोऽस्तु ते ॥ ३९ ॥
शिवे शिवात्मिके घोरे सर्वविद्यानिधे शुभे ।
प्रसन्ना भव सर्वज्ञे सर्वमन्त्रप्रकाशने ॥ ४० ॥
प्रसीद देवि चास्माकं सर्वभूतदयामयि ।
इति स्तवेन संस्तुष्टां महाकालीं करालिनीम् ॥ ४१ ॥
दण्डवत् प्रणिपत्यादौ पुनराह गरीयसीम् ।
आसवं च मया शप्तं कारणं शृणु भैरवि ॥ ४२ ॥
पीत्वासवं महादेवि न सिद्धिर्जायते मम ।
तस्माच्छप्तं महेशानि सर्वं निगदितं शृणु ॥ ४३ ॥
उवाच सा महासाध्वी काली कालस्वरूपिणी ।
प्रहसन्तीव सा देवी शुक्रं दैत्यगुरुं प्रति ॥ ४४ ॥
अमन्त्रिता सुरा वि(प्रो?प्र!)पीता परमदुर्लभा ।
तेनैव हेतुना सिद्धिर्न जाता तव सुन्दर ॥ ४५ ॥
अमन्त्रितसुरापाने प्रायश्चित्तं विधीयते ।
आयसे भाजने भद्र स्वर्णे रूप्ये तथैव च ॥ ४६ ॥
ब्राह्मणो वेदवांश्चैव पिबेच्च वारुणीं शुभाम् ।
तप्तां सुरां पिबेच्चैव नान्यथा सिद्धिमाप्नुयात् ॥ ४७ ॥
इति ते कथितं दिव्यं सारवृत्तान्तमुत्तमम् ।
अपेया सा निषिद्धा सानाघ्रेया चेति च क्रमात् ॥ ४८ ॥
अनिर्ग्राह्या च सा देवि या वै वैधेतरा भवेत् ।
तस्माज्जपविधौ ज्ञेया सुरा सिद्धिकरी मता ॥ ४९ ॥

सर्ववर्णैर्महेशानि देया च त्रिविधा सुरा ।
अथवासवसंभूत्यै दद्याद्वापि गुडार्द्रकम् ॥ ५० ॥
तक्रं वा गुडसंमिश्रं दद्याद् देव्यै प्रयत्नतः ।
नारिकेलोदकं कां(श्ये?स्ये)ताम्रे वा विसृजेन्मधु ॥ ५१ ॥
तारामन्त्रेण काल्याश्च अत्र पूर्णाविधौ तथा ।
अनुकल्पं चासवं च दद्यादतिमनोहरम् ॥ ५२ ॥
रम्भाफलं शालमत्स्यं जुहुयान्मन्त्रवित्तमः ।
सर्वा सिद्धिमनुक्रम्य अन्ते मोक्षमवाप्नुयात् ॥ ५३ ॥
साज्यस्य विल्वपत्रस्य होमेन जगती वशे ।
सहस्रहोमे देवेशि लभते सिद्धिमुत्तमाम् ॥ ५४ ॥
लभते मञ्जुलां वाणीं महाष्टम्यां च साधकः ।
कुलवारे कुलाष्टम्यां चतुर्दश्यां विशेषतः ॥ ५५ ॥
योगिनीपूजनं तत्र साधनं कुलपूजनम् ।
यथा विष्णुतिथौ विष्णुः पूजितो वाञ्छितप्रदः ॥ ५६ ॥
तथा कुलतिथौ शक्तिः पूजिता वरदायिनी ।
कुलवारे चतुर्दश्यामष्टम्यां च विशेषतः ॥ ५७ ॥
शङ्खस्थितं तोयपूर्णं ज(वा?पा)पुष्पं च वर्वरा ।
चन्दनं चार्ककुसुमं शुक्ला चैवापराजिता ॥ ५८ ॥
अ(न्न?र्घ्य)दानं विशेषेण नित्यपूजाक्रमः स्मृतः ।
अष्टोत्तरशतं जप्यं यावज्जीवितसंख्यया ॥ ५९ ॥
सहस्रं वा जपेन्मन्त्रं नित्यपूजाविधौ प्रिये ।
महोग्रायाः (?) सदा पूज्या पूजने कुल्लुका परा ॥ ६० ॥
स्तोत्रमन्त्रव्रतादीनामनुष्ठानं शृणु प्रिये ।
अननुष्ठानतस्तस्याः सर्वं तन्निष्फलं भवेत् ॥ ६१ ॥

महाविद्यां च सुन्दर्या वासुदेवं च योऽर्चयेत् ।
प्राप्नोति तत्फलं सर्वं हरिसायुज्यतां व्रजेत् ॥ ६२ ॥
वासुदेवो हरिर्ब्रह्मा तारिणी प्रकृतिः सदा ।
एकमूर्तिः सदा चिन्त्या एकमूर्तिः सदा स्थिता ॥ ६३ ॥
स्वर्गमोक्षप्रदा देवी [1]धनविद्याप्रदायिनी ।
धनविद्यायशोलक्ष्मीरायुरारोग्यवर्द्धिनी ॥ ६४ ॥
तस्मात्तां पूजयेद् देवीं गन्धपुष्पैश्च धूपकैः ।
नैवेद्यैर्विविधैर्भक्त्या पूजयेत् तारिणीं सदा ॥ ६५ ॥
आषाढे शयनं कुर्यात् सिंहे च परिवर्तनम् ।
आश्विने बोधयेद् देवीं पशुपायसभोजनैः ॥ ६६ ॥
रात्रौ पवित्रेण वरं जायते सुरसुन्दरि ।
दिवा प्रबोधेऽपि तथा स्वप्नेऽपि च कदाचन ॥ ६७ ॥
शुक्लाष्टम्यां घटाष्टम्यां घटस्य च विशेषतः ।
माघमासस्य च विधौ रात्रौ संपूजयेत् सुधीः ॥ ६८ ॥
पीठार्चनं महादेवि यत्र सिद्धिरनुत्तमा ।
पीठानां परमं पीठं कामरूपं महाफलम् ॥ ६९ ॥
तत्र यत् क्रियते पूजा सकृद्वापि महेश्व(री?रि) ।
विहाय सर्वपीठानि तस्य देहे वसाम्यहम् ॥ ७० ॥
तस्माच्छतगुणं प्रोक्तं कामाख्यायोनिमण्डलम् ।
तेषां फलं महेशानि वक्तुं किं शक्यते मया ॥ ७१ ॥
तत्र कोटिगुणैः सार्धमाद्या[2] वसति तारिणी ।
मत्पीठं ब्रह्मणो वक्त्रं गुप्तं सर्वसुखावहम् ॥ ७२ ॥
यतो देवाश्च वेदाश्च मुनयश्चैव भावजाः ।
सर्वेऽप्याविर्भवन्त्येते तेन गुप्तं सदा कुरु ॥ ७३ ॥

---

१ 'जप' ख. पाठः । २ 'माया' ख. पाठः ।

द्विविधं चैव यत्पीठं गोप्तव्यं तन्महेश्वरि ।
व्यक्ताद् गुप्तं महापुण्यं दुरापं साधकाधमैः ॥ ७४ ॥
गुप्तं सर्वत्र देशे तु लभ्यत कुलसुन्दरि ।
पीठप्रसङ्गाद् देवेशि पीठानि शृणु भैरवि ॥ ७५ ॥
शृणु तानि महाप्राज्ञे श्रेष्ठस्थानानि यानि च ।
सिद्धिप्रदानि साधूनां महद्भिः सेवितानि च ॥ ७६ ॥
पुष्करं च गयाक्षेत्रमक्षया(य्यादि)वटं तथा ।
वराहपर्वतं चैव शिवं चामरकण्ठकम् ॥ ७७ ॥
नर्मदा यमुना पिङ्गा गङ्गाद्वारं तथा प्रिये ।
गङ्गासागरसङ्गं च कुशावर्तं च बिल्वकम् ॥ ७८ ॥
श्रीनीलपर्वतं चैव कलम्बकुञ्जके तथा ।
भृगुतुङ्गं च केदारं सर्वप्रियमहालयम् ॥ ७९ ॥
ललिता च सुगन्धा च शाकम्भरीपुरं प्रियम् ।
कणतीर्थं महागङ्गा तिलिकाश्रममेव च ॥ ८० ॥
कुमाराख्यप्रभासौ च तथा धन्या सरस्वती ।
अगस्त्याश्रममिष्टं मे काण्वाश्रममतः परम् ॥ ८१ ॥
कौशिकीसरयूशोणज्योतिःसरःपुरःसरम् ।
कामोदकं प्रियं श्रीमत् प्रियमुत्तरमानसम् ॥ ८२ ॥
मतङ्गवापी सप्तार्चिर यद्विष्णुपदं महत् ।
वैद्यनाथं महातीर्थं प्रियः कालञ्जरो गिरिः ॥ ८३ ॥
वामोच्छेदं हरोच्छेदं गर्गोच्छेदं महानलम् ।
भद्रेश्वरं महातीर्थं लक्ष्मणोच्छेदमेव च ॥ ८४ ॥
जानीहि प्रियसृष्टा च कावेरी कपिलोदका ।
सोमेश्वरं शुक्लतीर्थं कृष्णवीण्या प्रभेदकः ॥ ८५ ॥

---

१ 'गुप्तं व्यक्तं' ख. पाठः । २ 'व्यक्त गुप्तं' ख. पाठः । ३ 'कोत्तमैः' ख पाठः ।
४ 'देवेशि' ख. पाठ· । ५ "भृगुभृङ्गं" इति पाठान्तरम् ।

पाटला च महाबोधिर्नागतीर्थं मदन्तिका ।
पुण्यं रामेश्वरं देवि तथा सेघवनं हरेः ॥ ८६ ॥
ऐलं रमणकं चैव गोवर्द्धनमतिप्रियम् ।
हरिश्चन्द्रं पुरश्चन्द्रं पृथूदकमतिप्रियम् ॥ ८७ ॥
इन्द्रनीलं महानादं तथैव प्रियमेनकम् ।
पम्पासरः पञ्चवटी वटीपर्वतिका तथा ॥ ८८ ॥
गङ्गाबिल्वं च प्रासङ्गः प्रियनादवटस्तथा ।
गङ्गाबामाचलं चैव तथैव ऋणमोचनम् ॥ ८९ ॥
गौतमश्वरतीर्थं च वसिष्ठतीर्थमेव च ।
हारीतकं तथा देवि ब्रह्मावर्तं शिवप्रदम् ॥ ९० ॥
कुशावर्तमतिश्रेष्ठं हंसतीर्थं तथैव च ।
पिण्डावकरणं ख्यातं हरिद्वारं तथैव च ॥ ९१ ॥
तथैव बदरीतीर्थं वामतीर्थं तथैव च ।
जयन्तं विजयन्तं च सर्वकल्याणदं प्रिये ॥ ९२ ॥
विजया शारदातीर्थं भद्रकालीश्वरं तथा ।
अश्वतीर्थं सुविख्यातं तथा वेदशिरः प्रियः ॥ ९३ ॥
ओघवती नदी चैव तीर्थमत्रिपदं तथा ।
छागलिङ्गं मातृगणं करवीरपुरं तथा ॥ ९४ ॥
सप्तगोदावरं तीर्थं सर्वधर्मफलप्रदम् ।
अयोध्या मथुरा माया दुर्गा द्वारावती हरेः ॥ ९५ ॥
विद्यापुरमवन्ती च काञ्ची मङ्गलकोटकम्[1] ।
कालीघट्टं गुप्ततीर्थं सिद्धाख्यं[2] सर्वमोहनम् ९६ ॥

---

१ 'नकुलकोटरं' 'नकुलकोटरं' 'मङ्गलकुटकं" वा इति पाठान्तराणि ।
२ "लिङ्गाख्यं" इति पाठान्तरम् ।

किरीटमुत्तरातीर्थं दक्षिणातीर्थमुत्तमम् ।
विशालातीर्थं काल्याश्च वनं वृन्दावनं तथा ॥ ९७ ॥
ज्वालामुखी हिङ्गुला च महातीर्थं गणेश्वरम् ।
जानीहि सर्वसिद्धीनां हेतुस्थानानि सुन्दरि ॥ ९८ ॥
अत्र सन्निहिता नित्यं सर्वे देवा महर्षयः ।
पितरो योगिनश्चैव ये च सिद्धिपरायणाः ॥ ९९ ॥
आशु सिद्ध्यन्ति कार्याणि श्रद्धाभक्तिमतां प्रिये ।
पुण्यकाले पठेद् यस्तु तत्पुण्यमक्षयं भवेत् ॥ १०० ॥
श्राद्धकाले पठेद् यस्तु शृणुयाद्वापि भक्तितः ।
अक्षयं तद्भवेद्वाक्यं पितॄणां परमं सुखम् ॥ १०१ ॥
अस्मिन् स्थाने [1]जपेद्यस्तु सिद्धिर्भवति तत्क्षणात् ।
अथ वक्ष्ये महेशानि यत्र या देवता शृणु ॥ १०२ ॥
यत्र ते यानि नामानि कथयिष्यामि तच्छृणु ।
मग्नोऽहं परमानन्दे त्वत्कथामृतवारिधौ ॥ १०३ ॥
पुष्करे कमलाक्षी च गयायां च गयेश्वरी ।
अक्षयाऽक्षयवटकेऽमरेशामरकण्ठके ॥ १०४ ॥
वराहपर्वते च त्वं वाराही धरणीप्रिया ।
दुर्मदा नर्मदायां च कालिन्दी यमुनाजले ॥ १०५ ॥
शिवामृता च गङ्गायामम्बा तु तिलिकाश्रमे ।
कुमारधाम्नि कौमारी प्रभासे सुरपूजिता ॥ १०६ ॥
काश्यां चैवान्नपूर्णा च द्राविडे च सरस्वती ।
महाविद्या मत्तमेधा अगस्त्याश्रमके तथा ॥ १०७ ॥
कौशिकीति प्रियं नाम कौशिकाम्[2]तकौशिके ।
शारदा सरयूतीरे शोणे च कनकेश्वरी ॥ १०८ ॥

---

१ "पेठद्यस्तु" इति वा पाठः। २ "घृतकौशिके" इति पाठान्तरम्।

स्वप्रकाशवशाद् देवि ज्योतिष्मतीह सङ्गमे ।
श्रीवहा श्रीगिरौ चैव काली कालोदके तथा ॥ १०६ ॥
महादेवि! महाबुद्धिर्नीला चोत्तरमानसे ।
मातङ्गी स्यात् मतङ्गे च गुप्ताचिर्विष्णुपादके ॥ ११० ॥
स्वर्गङ्गा स्वर्गमार्गे च गोदावर्यां गवेश्वरी ।
विमुक्तिश्चैव गोमत्यां विप्रभावा महाबला । १११ ॥
शतप्रभा शतरूपा चन्द्रभागा च तत्र वै ।
ऐरावत्यां च इनोम सिद्धिदा सिद्धितीरके ॥ ११२ ॥
दक्षपञ्चनदे चैव दक्षिणा त्वं प्रकीर्तिता ।
औजिसे वीर्यदा त्वं च सङ्गमा तीर्थसङ्गमे ॥ ११३ ॥
वाहुदायामसन्ता [?] त्वं कुरुक्षेत्रे वपेक्षणा ।
तपस्विनी पुण्यतमा भारती भरताश्रमे ॥ ११४ ॥
सुकथा नैमिषारण्ये पाण्डौ च पाण्डवानना ।
विशाल्यां च विशालाक्षी मुण्डपृष्ठे शिवात्मिका ॥ ११५ ॥
श्रद्धा कनखले तीर्थे शुद्धबुद्धिर्मुनीश्वरे ।
सुवेशा सुमना गौरी मानसे च सरोवरे ॥ ११६ ॥
नन्दापुरे महानन्दा ललिता ललितापुरे ।
ब्रह्माणी ब्रह्मशिरसि महापातकनाशिनी ॥ ११७ ॥
पूर्णिमा चेन्दुमत्याद्यैः सिञ्चयन्ती प्रिया सदा ।
जा(ह्नि?ह्न)वीसङ्गमे तृप्तिः स्वधा त्वं पितृतुष्टिदा ॥ ११८ ॥
पुण्याहा वेणुवत्यां च प्रपायां पापनाशिनी ।
शङ्खसंहारिणी घोररूपा चैव महोदरी ॥ ११९ ॥
गर्गोच्छेदे महारात्रिः प्रबला च महावने ।
भद्रा च भद्रकाली च भद्रेश्वरीश्वरप्रिया ॥ १२० ॥

भद्रेश्वरे रमा विष्णुप्रिया विष्णुपदे तथा ।
दारुणा नर्मदोच्छेदे कावेर्या कपिलेश्वरी ॥ १२१ ॥
भेदिनी कृष्णवेण्यायां संभेदे शुभवासिनी ।
शुद्धा वै शुक्लतीर्थे च प्रभा रामेश्वरे तथा ॥ १२२ ॥
महाबोधौ महाबुद्धिः पाटले पाटलेश्वरी ।
सुरसा नागतीर्थे च नागेशी नागवन्दिता ॥ १२३ ॥
मदन्ते च मदन्ती च प्रमदा च मदन्तिका ।
मेरुस्वना[1] मेघवने विद्युत्सौदामिनीच्छटा ॥ १२४ ॥
रामेश्वरे महा(वि?सि)द्धिर्वीरा चैलापुरे सती ।
प्रिया रमणके दुर्गा सुवेशा सुरसुन्दरी ॥ १२५ ॥
कात्यायनी महादेवी गोवर्द्धनेऽम्बिका तथा ।
शुभेश्वरी हरिश्चन्द्रे पुरश्चन्द्रे पुरेश्वरी ॥ १२६ ॥
पृथूदके महावेगा मेनाकेऽखिलवर्द्धिनी ।
इन्द्रनीले महाकान्ते रत्नवेशा सुशोभना ॥ १२७ ॥
माहेश्वरी महानादे महातेजा महाबला ।
पम्पासरसि शारङ्गा पञ्चवट्यां तपस्विनी ॥ १२८ ॥
वटीपर्वतिकायां च पञ्चवर्गा सुरङ्गिणी ।
सङ्गमे विन्ध्यसञ्ज्ञायां विन्ध्यश्रीर्विन्ध्यवासिनी ॥ १२९ ॥
महानन्दा नन्दतटे गङ्गावामाचले शिवा ।
आर्यावर्ते महार्या त्वं विमुक्तिर्ऋणमोचने ॥ १३० ॥
अट्टहासे च चामुण्डा तन्त्रेशी गौतमेश्वरे ।
वेदमयी ब्रह्मविद्या वाशिष्ठे त्वमरुन्धती ॥ १३१ ॥
हारीते हरिणाक्षी च ब्रह्मावर्ते व्रतेश्वरी ।
गायत्री चैव सावित्री कुशावर्ते कुशप्रिया ॥ १३२ ॥

---

१ "मेघबला मघवने" इति पाठान्तरम् ।

हंसीश्वरी हंसतीर्थे परहंसीश्वरीति च ।
पिण्डावकरणे धन्या सुरसा सुखदायिनी ॥ १३३ ॥
नारायणी वैष्णवी सा गङ्गाद्वारे त्रिमुक्तिदा ।
श्रीविद्या बदरीतीर्थे वामतीर्थे महाधृतिः ॥ १३४ ॥
जयन्ते च जयन्ती त्वं विजयन्ते ऽपराजिता ।
विजयायां महाशुद्धिः शारदायां च शारदा ॥ १३५ ॥
सुभद्रा भद्रदा भव्या भद्रकालीश्वरे तथा ।
महाभद्रे भद्रकाली हयतीर्थे गिरीश्वरी ॥ १३६ ॥
वेददा वेदमाता च वेदेशा वेदमस्तके ।
ओघवत्यां महावीर्या महानद्यां महोदया ॥ १३७ ॥
चण्डा चात्रिपदे चैव छागलिङ्गे बलिप्रिया ।
मातृदर्शे जगन्माता करवीरपुरे सती ॥ १३८ ॥
मलिनी रङ्गिणी वामा परमा परमेश्वरी ।
सप्तगोदावरे तीर्थे देवशीर्षाखिलेश्वरी ॥ १३९ ॥
अयोध्यायां भवानी च जयदा जयमङ्गला ।
माधवी मथुरायां च देवकी यादवेश्वरी ॥ १४० ॥
वृन्दा गोपेश्वरी राधा रासवृन्दावने रसे ।
कात्यायनी महामाया भद्रकाली कलावती ॥ १४१ ॥
चन्द्रमाला महाशान्तिर्महायोगिन्यधीश्वरी ।
वज्रेश्वरी यशोदेति व्रजश्रीर्गोकुलेश्वरी ॥ १४२ ॥
काञ्च्यां कनककाञ्ची स्यादवन्त्यामतिपावनी ।
विद्या विद्यापुरे चैव विमला नीलपर्वते ॥ १४३ ॥
राजेशे श्वेतगङ्गेशी विमला पुरुषोत्तमे ।
विरजा याग(पू?पु)र्यां च भद्रेशे भद्रकर्णिका ॥ १४४ ॥

तमोलिप्ते तमोघ्नी च स्वाहा सागरसंगमे ।
कुलश्रीर्वंशवृद्धिश्च माधवी माधवप्रिया ॥ १४५ ॥
मङ्गला मङ्गले कोटे राढे मङ्गलचण्डिका ।
ज्वालामुखी शिवापीठे मन्दारे भुवनेश्वरी ॥ १४६ ॥
कालीघट्टे गुह्यकाली किरीटे च महेश्वरी ।
किरीटेश्वरी महादेवी लिङ्गाख्ये लिङ्गवाहिनी ॥ १४७ ॥
साक्षात् सर्वत्र भक्तानामभक्तानां कुतोऽपि न ।
अथान्यत् संप्रवक्ष्यामि सिद्धिस्थानानि सुन्दरि ॥ १४८ ॥
सर्वपापविनाशा(र्थि?य)सर्वसिद्धिप्रदानि च ।
निर्मितानि शिवेनेह सि(द्ध?द्धि)स्थानानि यानि च ॥ १४९ ॥
श्रुत्वा मनसि भाव्यानि प्रकाशान्यधिकारिषु ।
अमरेशमहापीठे ईश ओंकारसंज्ञकः ॥ १५० ॥
तत्र दुर्गाह्वयं नाम चण्डिका च महेश्वरी ।
प्रभासे सोमनाथादौ देवी च पुष्करेक्षणा ॥ १५१ ॥
देवदेवाधिपः शम्भुर्नैमिषे च महेश्वरः ।
तत्र प्रज्ञा च देवी च भवानी लिङ्गधारिणी ॥ १५२ ॥
पुष्करे च राजगन्धिः पुरुहूता महेश्वरी ।
श्रीपर्वते प्रियं नाम शङ्करस्त्रिपुरान्तकः ॥ १५३ ॥
मायापि शङ्करी तत्र भक्तानामखिलार्थदा ।
जप्येश्वरे महास्थाने शङ्करी च त्रिशूलिनी ॥ १५४ ॥
त्रिशूलः शङ्करस्तत्र सर्वपापविमोचकः ।
आम्रातकपुरे सूक्ष्मः सूक्ष्माख्या परमेश्वरी ॥ १५५ ॥
महाकाले महाकालो महाकाली महेश्वरी ।
मध्ये शिवश्च सर्वत्र शर्वाणी परमेश्वरी ॥ १५६ ॥

केदारेश्वर ईशानो देवी सन्मार्गदायिनी ।
भैरवे भैरवः शम्भुर्भैरवी परमेश्वरी ॥ १५७ ॥
गयाक्षेत्रे मङ्गलाख्या शिवोऽहं प्रपितामहः ।
कुरुक्षेत्रे शिवः स्थाणुः शिवा स्थाणुप्रिया परा ॥ १५८ ॥
इष्टलाभे स्वयंभूश्च देवी स्वायम्भवा मता ।
उग्रः कनखले प्रोक्तः शिवोग्रा शिववल्लभा ॥ १५९ ॥
त्रिसलेश्वरे विश्वस्तु विश्वा विश्वप्रिया सदा ।
अट्टहासे महानन्दो महानन्दा महेश्वरी ॥ १६० ॥
महान्तको महेन्द्रे च पार्वती च महान्तका ।
भीमेश्वरो भीमपीठे शिवा भीमेश्वरी तथा ॥ १६१ ॥
वस्त्रपादे भवो नाम भवानी भुवनेश्वरी ।
अद्रिकूटे महायोगी रुद्राणी परमेश्वरी ॥ १६२ ॥
अविमुक्ते महादेवो विशालाक्षी शिवा परा ।
महालये हरो रुद्रो महाभागा शिवा तथा ॥ १६३ ॥
महाबलश्च गोकर्णे शिवा [1]ज्ञेया च चण्डिका ।
भद्रवर्णे महादेवो भद्रा च कर्णिका तथा ॥ १६४ ॥
सुवर्णाख्ये सहस्राक्ष उत्पला परमेश्वरी ।
स्थाणुसङ्गे शिवः स्थाण्वीश्वरः स्थाण्वीश्वरा शिवा ॥ १६५ ॥
कमलालये म(हास्नाने?हेशानो)कमलाक्षो महेश्वरः
कमलाक्षी महेशानी सकलार्थप्रदायिनी ॥ १६६ ॥
छगलाण्डे कपर्दी च प्रसरा च महेश्वरी ।
ऊर्ध्वरेता द्विरण्डे च सन्ध्याख्या परमेश्वरी ॥ १६७ ॥
माकोटाख्ये महाकोटः शिवा च मुण्डकेश्वरी ।
मण्डलेश्वरपीठे च शङ्करः खाण्डवी शिवा ॥ १६८ ॥

---
१ "भद्रा च" इति पाठान्तरम् ।

कालञ्जरे नीलकण्ठो हरकाली शिवा मता ।
स्थाण्वीश्व(रो॥रे)स्थलो नाम्ना स्थलाख्या परमेश्वरी ॥ १६९ ॥
श्रीमद्व्याघ्रपुरे साक्षाद्धरनामा सभापतिः ।
शिवः सभापतिर्नाम यत्र नृत्यति शङ्करः ॥ १७० ॥
आत्मानन्दमहामोदपूर्णानन्दमहार्णवम् ।
नृत्यन्तं यत्र देवेशं देवेशी परिपश्यति ॥ १७१ ॥
यत्र आशु महादेवो भक्तानां वरदो भवेत् ।
नृत्यन्तं यत्र देवेशं वीक्ष्य लोको विमुच्यते ॥ १७२ ॥
पुण्यस्थानेषु सर्वेषु स्थानमेतन्महोत्तमम् ।
यत्र कर्माणि सर्वाणि अक्षयाणि भवन्ति वै ॥ १७३ ॥
अस्मिन् महोत्तमे स्थाने शिवगङ्गाख्यमद्भुतम् ।
तटाकमस्ति तत्तीरे दक्षिणे नृत्यतीश्वरः ॥ १७४ ॥
तटाकेऽस्मिन् वसन् स्नात्वा सभानाथं समीक्ष्य च ।
अष्टोत्तरसहस्रं तु जपेच्छ्रद्धासमन्वितः ॥ १७५ ॥
यानि ते कथितान्यत्र सदा तिष्ठन्ति देवताः ।
पितरः सिद्धगन्धर्वाः सिद्धयः सर्वसिद्धिदाः ॥ १७६ ॥
अत्र दत्तं हुतं जप्तं स्नानमक्षयपुण्यदम् ।
यद्यत् प्रकीर्तितं नाम तेनैव परिपूज्य च ॥ १७७ ॥
प्रणवादिहृदन्तेन लभतेऽभीष्टमुत्तमम् ।
भोजयेद् ब्राह्मणान् योऽत्र सोऽक्षयं फलमश्नुते ॥ १७८ ॥
इह नानासुखं भुक्त्वा हरगौरीपुरं व्रजेत् ।
शोकदुःखविनाशाय करुणानिधिरीश्वरः ॥ १७९ ॥
निर्ममे सर्वसंपत्त्यै पुण्यक्षेत्राणि भूतले ।
अनेकपुण्यशुद्धानामनेककालसाधनैः ॥ १८० ॥

आस्तिकानां भवेदत्र निवासः साधनं श्रुतिः[१] ।
तस्माद्यत्नेन कर्त्तव्यमत्र साधनमुत्तमैः ॥ १८१ ॥
इदानीं शृणु चार्वङ्गि पीठं सर्वाङ्गसुन्दरम् ।
अक्षमालामयं पीठं(ब्रूहि?विद्धि)मे परमेश्वरि ॥ १८२ ॥
यत्र सिद्ध्यन्ति कार्याणि स्थितिस्ते शङ्करस्य च ।
विष्णोरगाधबोधस्य तत्क्रियाया महेश्वरि ॥ १८३ ॥
अन्येषां चैव देवानां युष्मत्पदनिवासिनाम् ।
प्रसादो हि भवत्याशु तत्र मे प्रीतिरुत्तमा ॥ १८४ ॥
प्रिये ते कथयिष्यामि अक्षमालात्मकं परम् ।
सान्निध्यं यत्र सर्वेषां तस्मादादि दिवौकसाम् ॥ १८५ ॥
अस्माभिश्च महद्भिश्च यद्यत् स्थानमलंकृतम् ।
तत्तन्महोत्तमं प्रोक्तं सर्वसिद्धिप्रदं प्रिये ॥ १८६ ॥
महान्तो यत्र तिष्ठन्ति साधयन्ति परं पदम् ।
तत्तन्महोत्तमं स्थानं सर्वं कल्याणदं प्रिये ॥ १८७ ॥
अमरेशपुरं चैवासुरान्तकं पुरं तथा ।
तत्तन्महोत्तमं स्थानं सर्वसिद्धिकरं नृणाम् ॥ १८८ ॥
सतीभिः साधुभिः कान्ते यद्यत् स्थानमलंकृतम् ।
अम्बिकापीठमत्यन्तमनन्तपुरमेव च ॥ १८९ ॥
अनिरुद्धपुरं चेत्ति तथादितिपुरं परम् ।
अग्निनादिपुरं चैव अश्वमेधपुरं परम् ॥ १९० ॥
अन्नपूर्णामहापीठमम्बुजाख्यपुरं तथा ।
आदिपीठानन्दपीठौ चामोदावादिसूक्तरौ ॥ १९१ ॥
आशु सिद्धिपुरं चैव यथाद्यन्तपुरं सुखम् ।
अकम्पादित्यपीठौ च आद्यादिनाथपीठकौ ॥ १९२ ॥

१ "गतिः" इति पाठान्तरम् ।

इष्टनामपुरं चैव इन्दिरापुरमेव च ।
इलोदयगिरिश्चैव इलान्तेन्दुपुरे प्रिये ॥ १९३ ॥
इन्द्राणीन्द्रेश्वरश्चैव इन्द्रानन्दपुरं तथा ।
पुरमिन्दुवती-नाम तथेन्दुविजयं पुरम् ॥ १९४ ॥
ईश्वरीश्वरयोगौ च ईशानन्देश्वरीपुरम् ।
ईशान्यैशपुरं देवि कथितं पीठमुत्तमम् ॥ १९५ ॥
कामरूपं प्रियं वाराणसी नैपालमेव च ।
पौण्डवर्द्धनपीठं च पौरक्यं कान्यकुब्जकम् ॥ १९६ ॥
पुण्याद्रिमर्बुदं चैव एकाम्राम्रातकेश्वरम् ।
त्रिस्रोतः[1] कामकोटं च तथा भृगुपुरं वरम् ॥ १९७ ॥
कैलासपीठं केदारं शुभं चन्द्रपुरं तथा ।
श्रीपुरं च तथा कन्यापुरं जालन्धरं तथा ॥ १९८ ॥
मालवं बिल्वपीठं[2] च देवीकोटं तथैव च ।
गोकर्णं मारुतेशं च तथाट्टहासमेव च ॥ १९९ ॥
कोल्लानामकगोत्रं च एलापुरमतिप्रियम् ।
महापथपुरं चैव ओंकारपुरमेव च ॥ २०० ॥
जयदं च जयपुरमुज्जयिनीपुरं तथा ।
हरिद्रापीठकं चैव प्रियं क्षीरपुरं प्रियम् ॥ २०१ ॥
गजाह्वयपुरं चैव उड्डीशपुरमेव च ।
प्रयागं च तथा षष्ठीपुरमेव शिवप्रदम् ॥ २०२ ॥
मायापुरमतिश्रेष्ठं पुरं च सौरभेश्वरम्[3] ।
श्रीशैलं मेरुपीठं च मलयं च महागिरिम् ॥ २०३ ॥
महेन्द्रपुरपीठं च तथा बलिपुरं प्रियम् ।
हिरण्यपुरपीठं च महालक्ष्मीपुरं तथा ॥ २०४ ॥

---

१ त्रैपुरं' ख. पाठः । २ 'च कुलान्तं च' ख. पाठः । ३ 'परमेश्वरं' 'जलेश्वरं' ख. ।

चण्डीपुरमतिश्रेष्ठं तथा छायापुरं प्रिये ।
ज्ञात्वा पीठमिदं देवि मद्भक्तेषु प्रकाशय ॥ २०५ ॥
समुद्धर इमाँल्लोकान् मत्सम्बन्धविधानतः ।
संसारानलसंतप्तान् चिन्तावायुविघूर्णितान् ॥ २०६ ॥
कृपयामृतवर्षिण्या अभिषिच्योद्धर प्रिये ।
पुण्यमस्ति महत् कान्ते यशोऽप्यस्ति महत्सुखम् ॥ २०७ ॥
महाजनप्रसादोऽस्ति मत्प्रीतिर्लोकरक्षणे ।
मत्प्रसङ्गो मदालापो मत्सवो मदनुग्रहः ॥ २०८ ॥
मत्कर्म मम सम्बन्धो मन्नाम मम चिन्तनम् ।
मत्कथा मदनुध्यानं मदावेशो मदर्चना ॥ २०९ ॥
मदीक्षणं मदैक्यं च मन्मतिर्मन्नतिः स्तुतिः ।
मद्गानं मे पुरे नाट्यं मत्कर्मोद्योग एव च ॥ २१० ॥
मन्नाम वै मन्मनवो मच्चेष्टा मत्प्रियस्पृहा ।
एकेनैव कृतार्थश्च मदनुग्रहभाग् भवेत् ॥ २११ ॥
यदिच्छेत् तीर्थपीठेषु तदाशु लभते प्रियम् ।
मन्मन्त्रग्रहणादेव निष्पापो जायते पुनः ॥ २१२ ॥
साधनाल्लभते सिद्धिः सिद्धक्षेत्रेष्वदीर्घतः ।
मन्मनुग्रहणं (न्यू?नू)नं मत्तोषकारणं परम् ॥ २१३ ॥
गृहीत्वा नार्चयेद्यस्तु न जाने किं स मे पुनः ।
स्वर्गतः सुरवृक्षोऽपि न वै भवति कामदः ॥ २१४ ॥
नाश्रयेद्यदि तन्मूलं को दोषस्तस्य तत् प्रिये ।
चिन्तामणिर्गृहेऽप्यस्ति न तत्र क्वापि च स्पृहा ॥ २१५ ॥
को दोषस्तस्य यत्नेन सिध्यन्ति सकलाः क्रियाः ।
तस्माद्यत कथितं तुभ्यं तत्र यत्नः फलप्रदः ॥ २१६ ॥

विना यत्नेन किं किं स्यान्न जाने विजये सखि ।
सन्ति तीर्थानि सर्वाणि भास्करोऽयं हुताशनः ॥ २१७ ॥
तारकाश्चन्द्रमा ज्योतिर्जलदा जलमेव च ।
वसुधादिग्रहा येऽन्ये दिशो विदिश एव च ॥ २१८ ॥
तुलसी ब्राह्मणाश्चैव पुराणानि बहूनि च ।
शैवाश्च वैष्णवाश्चैव सारो धर्मः सनातनः ॥ २१९ ॥
मद्भक्त्यवितथश्रद्धाशरणाश्च निरन्तरम् ।
उपाया विविधाः सन्ति स्वपरित्राणहेतवः ॥ २२० ॥
तथापि न यतन्तेऽहो तथा चेच्छन्ति किल्विषम् ।
राजकोपप्रशमार्थे किं किं न स्यात्तदर्थिनः ॥ २२१ ॥
सुखदुःखोपभोगश्च देशाद् देशान्तरं तथा ।
प्राप्याप्राप्ये तथा वस्तू दिवा रात्रिस्तथैव च ॥ २२२ ॥
इन्द्रियस्पर्शभोगाश्च मेध्यामेध्यं च दर्शने ।
यत्नायत्नकृतं कार्यं सिक्तासिक्तमहोदधिः ॥ २२३ ॥
भुक्ताभुक्तशरीरं तु सुवेशश्च कुवेशकः ।
प्रियवागप्रियवाक् च दूरं निकटमेव च ॥ २२४ ॥
सुखं दुःखं तथा यच्च नानाकर्म प्रियाप्रियम् ।
सर्वेषां हासवृद्धी च वपुषां निर्गमागमौ ॥ २२५ ॥
धनानां स्थितिनाशौ च गन्धानां च क्षयस्थिती ।
वयोयौवनरूपाणां प्रक्रमं सर्वमेव च ॥ २२६ ॥
पश्यन्तोऽपि न पश्यन्तो ज्ञानिनोऽज्ञानिनः सदा ।
तस्माच्छ्रद्धामयं मन्त्रं(सर्वं)श्रद्धा हि भावासिद्धिदा ॥ २२७ ॥
अस्मासु भावना यस्य सोऽस्मासु प्रतिपद्यते ।
तस्मात् साधुपदे सद्भिर्गन्तव्यमतियत्नतः ॥ २२८ ॥

प्रमादादपि नासाधुपथे वै ज्ञानदृष्टिभिः ।
इति सर्वं समालोच्य यथार्थं बुद्ध्य पण्डिते ॥ २२९ ॥
आचर स्वं प्रियं धर्मं प्रवर्तय शुचिव्रतम् ।
मत्पदाम्बुजसेवासु व्रजन्तु मम सन्निधिम् ॥ २३० ॥
क्रीडन्तु सज्जनैः सार्धं प्राप्नुयुः परनिर्वृतिम् ।
एतैर्मदुपदेशैस्त्वं शृणु वार्तां महामते ॥ २३१ ॥
त्वत्प्रसादादिमे लोकाः सूरिणः स्युर्महाप्रिये ।
अत्र ते प्रियनामानि शृणुष्व नगनन्दिनि ॥ २३२ ॥
कामेशा कामरूपे त्वं पूर्णा काश्यां विमुक्तिदा ।
नेपाले पुण्यदा पुण्या सुवेशा पौण्ड्रवर्द्धने ॥ २३३ ॥
धर्मबुद्धिः सुधा चैव सुखदा पापमोचनी ।
[1]पौरस्त्ये परमानन्दा ब्रह्माणी कान्यकुब्जके ॥ २३४ ॥
पुण्याद्रौ च महापुण्या पूर्णा यज्ञफलेश्वरी ।
कात्यायन्यर्बुदे देवि धनदा शिववल्लभा ॥ २३५ ॥
एका चैकाम्रके देशे सुरूपेशाम्रकेश्वरे ।
[2]त्रिपुरे सुन्दरी दिव्यरूपाखिलमनोहरा ॥ २३६ ॥
कामकोटे महापीठे प्रमदा मदनालसा ।
कामेश्वरी रतिश्चैव भृगुपुर्यां व्रजेश्वरी ॥ २३७ ॥
वृत्तेशा च तपोलक्ष्मीः कैलासे भुवनेश्वरी ।
केदारे वरदा चैवामृता चन्द्रपुरे सिता ॥ २३८ ॥
कलावती प्रभेशा च श्रीपुरे श्रीरमा प्रिया ।
कुमारी ब्रह्मचर्या च कन्या च कन्यकापुरे ॥ २३९ ॥
जालन्धरे महापीठे नागर्याभिमुखी शुभा ।
ज्वालामुखी लोलजिह्वा सुवेशा च सुरङ्गिणी ॥ २४० ॥

१ 'पारस्ये' ख. पाठः । २ 'त्रिस्रोतसि' ख पाठः ।

मालवे च महाविद्या विल्वपीठे च रूपिणी ।
रूपवती महादेवी देवीकोटेऽखिलेश्वरी ॥ २४१ ॥
गोकर्णे प्रियपीठे त्वं रुद्राणी सर्वमङ्गला ।
पवने हरपीठे च गन्धश्रीश्च सुगन्धिका ॥ २४२ ॥
अट्टहासे महापीठे भीमकाली च कालिका ।
विरजे मुक्तिहेतुश्च नमः-स्वस्ति-सुधामयी ॥ २४३ ॥
जयश्री राजलक्ष्मीश्च सुवेशा राजपर्वते ।
एलापुरे महासंपत् माहेश्वरी महापथे ॥ २४४ ॥
गायत्री ब्रह्मरूपा च तत्सदोङ्कारपीठके ।
जया जयपुरे देवी जयदा जयमङ्गला ॥ २४५ ॥
विजया मङ्गला गौरी उज्जयिन्यां सदा शिवा ।
गौरीश्वरी महादेवी हारद्रापीठके शिवा ॥ २४६ ॥
क्षीरपीठे युगाद्या च क्षीराख्या नियमप्रभा ।
राजेश्वरी महालक्ष्मीर्हस्तिनापुरवासिनी ॥ २४७ ॥
कमला विमला भक्ती रौद्री च नीलपर्वते ।
योगेश्वरी त्रिवेण्यां च त्रिःस्रोता ब्रह्मरूपिणी ॥ २४८ ॥
सिन्धुस्थ(ली?ले)कामधेनुः षष्ठी षष्ठीपुरे प्रिये ।
माया मायापुरे देवी सुरभी सौरभेश्वरे ॥ २४९ ॥
विलासिनी महानन्दा प्रियचन्दनपर्वते ।
महाव्रजेश्वरी श्रेष्ठा शमनेश्वरपीठके ॥ २५० ॥
भवानी भवभक्ता च श्रीशैले शिववल्लभा ।
देवता या स्वर्गलक्ष्मीः कनकामरपर्वते ॥ २५१ ॥
उमा गौरी सती सत्या पार्वती हिमपर्वते ।
इन्द्रेश्वरी सुराराध्या माहेन्द्रे जगदीश्वरी ॥ २५२ ॥

---

१ 'त्रिवेणी' ख. पाठः ।

अल्लाभोगेश्वरी नित्या श्रीमद्धलिपुरे शिवा ।
सुवर्णा कनका वामा हिरण्यपुरपीठके ॥ २५३ ॥
महालक्ष्मीर्महेशानी महालक्ष्मीपुरेऽम्बिका ।
चण्डीपुरे[1] प्रचण्डा च चण्डा चण्डवती शिवा ॥ २५४ ॥
छत्रे मेघस्वना चैव माया च्छत्रेश्वरी तथा ।
कालीघट्टे महापीठे काली कालात्मिका तथा ॥ २५५ ॥
लिङ्गाख्ये भैरवी विद्या विजया जाह्नवीतटे ।
इति ते कथितं दिव्यं पीठक्रममुदाहृतम् ॥ २५६ ॥
अतिगुह्यं महेशानि कथितं देववन्दिते[2] ।
मद्भक्तेभ्यो महेशानि प्रकाशमुपपादय ॥ २५७ ॥
तेषां भाग्यवशेनैव कथितं मन्मुखोदितम् ।
अकथ्यं कथितं भद्रे अतिप्रियतमे शिवे ॥ २५८ ॥
सारात् सारतरं सर्वं कथितं तव सुन्दरि ।



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (नैमित्तिकार्चन-पीठ-तदीश्वरीवर्णनं) पञ्चमः पटलः ॥ ५ ॥

---

१ 'चण्डा' ख. पाठः । २ "सुरगणार्चिते" इत्यपि पाठः ।

अथ

## षष्ठः पटलः ।

श्रीदेव्युवाच ।

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
इदानीं श्रोतुमिच्छामि पूजनं कुलपूजनम् ॥ १ ॥
यत्कृ(ते[1]त्वा)साधको वीरः सद्यो मोक्षमवाप्नुयात् ।
एकश्चेत् कुलशास्त्रज्ञः पूजार्हस्तत्र भैरव ।
कथयस्व महादेव यदि स्नेहोऽस्ति मां प्रति ॥ २ ॥

श्रीभैरव उवाच ।

कथितव्यं महापुण्यं विस्तरेण तपोधने ।
सर्व एव सुराः पूज्याः सत्यं ब्रह्मादयः शिवे ॥ ३ ॥
एका चेद्युवती तत्र पूजिता चावलोकिता ।
स(र्वै[2]र्वा ए)व परादेव्यः पूजिताः कुलभैरवि ॥ ४ ॥
आदावन्ते च मध्ये च सा हि पूज्या विशेषतः ।
न पूजयति चेत् कान्तां बहुविघ्नैर्विलिप्यते ॥ ५ ॥
पूर्वार्जितफलं नास्ति का कथा परसाधने[3] ।
नवशक्तिर्महेशानि पञ्चशक्तिश्च भैरवि ॥ ६ ॥
पूजिता विगुणं सर्वं सगुणं कारयेद्यतः ।
पृथिवीं सस्यसंपन्नां ब्राह्मणे वेदपारगे ॥ ७ ॥
दत्त्वा यत्फलमाप्नोति तत्फलं कौलिकार्चनात् ।
अन्नदानं सहस्रेभ्यः शतेभ्यो यज्वनामपि ॥ ८ ॥
तेषां भोजनदानेन तत्फलं कौलिकार्चनात् ।
वापीकूपतडागानि कृत्वा च शिवकृष्णयोः ॥ ९ ॥

---

१ 'लक्षपूर्तौ' ख. पाठः। २ 'तदा' ख. पाठः। ३ 'पूजने' ख. पाठः।

दानाद् यत् फलमाप्नोति तत्फलं कौलिकार्चनात् ।
यदि भाग्यवशेनैव वारमेकं प्रपूजयेत् ॥ १० ॥
कृता(र्थो?र्था)स्ते हि निस्तीर्णा यान्ति देवीपुरे स्वयम् ।
पुरश्चरणकालेऽपि यदि स्यात् पीठपूजनम् ॥ ११ ॥
तत्रैव पीठपूजा सा मनसापि न हीयते ।
देवीकोटे महाभागा उड्डियाने च भैरवी ॥ १२ ॥
योनिमुद्रा[1] कामरूपे महिषासुरमर्दिनी ।
कात्यायनी कामभूमौ कामाख्या कामरूपिणी ॥ १३ ॥
जालन्धरी च पूर्णेशी पूर्णशैले च चण्डिका ।
कामरूपे ततो देवी पूज्या दिक्करवासिनी ॥ १४ ॥
अथवा कामरूपस्य दर्शनं यदि भाग्यतः ।
तदा भगादिदेवीनां पूजा तत्र विधीयते ॥ १५ ॥
यदि भाग्यवशेनैव कुलदृष्टिः प्रजायते ।
तदैव मानसीं तत्र तासां च संप्रकल्पयेत् ॥ १६ ॥
भगिनीं भगजिह्वां च भगास्यां भगमालिनीम् ।
भगिनीं च भगाक्षीं च भगकर्णां भगत्वचम् ॥ १७ ॥
भगनासां भगस्तनीं भगस्थां भगरूपिणीम् ।
तत्र संपूज्य गन्धाद्यैर्मानसैर्गुरुमेव च ॥ १८ ॥
नमस्कृत्य विधानेन स्वयमक्षोभितः सुधीः ।
द्वादश्यां पूजयेद्विष्णुं चतुर्दश्यामुमापतिम् ॥ १९ ॥
अष्टम्यां पूजयेच्छक्तिं सर्वसिद्धिप्रदां किल ।
केशसंस्कारकर्माणि कारयेत् सर्वदा प्रिये ॥ २० ॥
आदावानीय देवेशि स्वकान्तां वा परस्त्रियम् ।
प्रथमं चासनं दत्त्वा पाद्यं दद्यात्ततः परम् ॥ २१ ॥

---

१ 'योगनिद्रा' ख. पाठः ।

अर्घ्यं दद्यान्महेशानि यथोक्तविधिना शिवे ।
आचमनीयं च तथा दद्याच्च सुधया प्रिये ॥ २२ ॥
स्नानीयं परमेशानि वौषडन्तेन दापयेत् ।
गन्धं दद्यान्महेशानि गन्धानामष्टकं तथा ॥ २३ ॥
पुष्पं दद्याद्वरारोहे गन्धयुक्तं मनोहरम् ।
धूपं गुग्गुलुना दद्यात् महादेव्यै मनोहरम् ॥ २४ ॥
दीपं च सर्पिषा दद्यात् ताम्राधारं सुशोभनम् ।
नैवेद्यं परमं दद्यात् सुस्वादु सुमनोहरम् ॥ २५ ॥
नानाद्रव्ययुतं दद्यान्नारिकेलयुतं तथा ।
रम्भाफलं वीजपूरं श्रीफलं श्रीनिकेतनम् ॥ २६ ॥
मधु दद्यान्महेशानि पलद्वयमितं शुभे ।
घृतं दद्यान्महेशानि नूतनं पलमानतः ॥ २७ ॥
नानोपहारसंयुक्तं दधिदुग्धयुतं तथा ।
ताम्बूलं परमं दद्यात् सुस्वादु च सुवासितम् ॥ २८ ॥
कर्पूरादिसमायुक्तं गुवाकेन समन्वितम् ।
चर्व्यं चोष्यं तथा लेह्यं पेयं दद्यान्महेश्वरि ॥ २९ ॥
जलं दद्याद्वरारोहे कर्पूरादिसुवासितम् ।
यद्यदिच्छति तस्मिन् वै काले सुरगणार्चिते ॥ ३० ॥
तत्तद् दद्याद्विशेषेण येन तुष्यति सुन्दरी ।
सप्तवर्षाष्टवर्षा वा नववर्षा च या भवेत् ॥ ३१ ॥
दशवर्षा महेशानि एकादशगता तथा ।
द्वादशे वर्षे संप्राप्तौ तथा त्रयोदशे शुभे ॥ ३२ ॥
चतुर्दशे तथा देवि( तथा ? वर्षे )पञ्चदशे तथा ।
षोडशवर्षा तथा देवि श्रेष्ठा कामप्रदा तु सा ॥ ३३ ॥

---

[1] 'प्राप्ते' क. पाठः ।

केशसंस्करणं कुर्यात्स्नानाद्रव्यैर्मनोरमैः ।
ततो दद्यात् महाद्रव्यं येन तुष्यति मानवी ॥ ३४ ॥
स्तनद्वन्द्वे रमाबीजं हृत्पद्मे भग-द्वयम् ।
कक्षाधः परमेशानि लिखेत गङ्गाधर-द्वयम् ॥ ३५ ॥
योन्यधः कामिनी-युग्ममूरुद्वये लिखेत् प्रिये ।
पादपद्मतले विश्वबीजं परमदुर्लभम् ॥ ३६ ॥
संलिख्य विधिवद्भक्त्या शिरीषवृन्तकेन वै ।
भगे लिखेन्महेशानि बालाबीजं महेश्वरि ॥ ३७ ॥
ओष्ठद्वये भगं चैव लेखन्या कनकस्य च ।
हस्तद्वये काकिनी च लेखनीया च देशिकैः ॥ ३८ ॥
रक्तवस्त्रं महेशानि दद्याद्भद्रं मनोरमम् ।
रक्तागुरुचन्दनेनैव लिखेत् बीजं सुरेश्वरि ॥ ३९ ॥
भगे पुष्पाञ्जलिं दत्त्वा प्रणमेद् दण्डवद्भुवि ।
एवं वारत्रयं कुर्यात् यावद् वृष्टिर्न जायते ॥ ४० ॥
मूलमन्त्रं महेशानि जपेत् पर्वतमस्तके ।
सहस्रस्य प्रमाणेन जपेत तत्र महेश्वरि ॥ ४१ ॥
अष्टाविंशतिमानेन तदास्ये तु जपेत् प्रिये ।
अष्टोत्तरशतं योनिगर्तमध्ये जपेत् प्रिये ॥ ४२ ॥
तासामभीष्टसिद्ध्यर्थं कुर्यात् पर्वतमर्दनम् ।
मूलं जपेन्महेशानि ताडयेद् योनिमण्डलम् ॥ ४३ ॥
ततस्तन्त्रं पुरः स्थित्वा सिद्धो भवति साधकः ।
कालीप्रयोगमेतद्धि जानीहि सुरवन्दिते ॥ ४४ ॥
काली तारा महाविद्या त्रिपुराख्या महेश्वरी ।
एतासां भैरवीणां च प्रयोगात् सिद्धिमाप्नुयात् ॥ ४५ ॥

बलिं दद्यान्महेशानि सन्ध्याकाले शिवालये ।
अदत्त्वा च महादेवि बलिं सर्वहितं प्रिये ॥ ४६ ॥
........................................ ।
शिवायै च बलिं दद्यात् सर्वयत्नपुरःस(रैःरम्) ।
अन्यथा सिद्धिहानिः स्यान्नात्र कार्या विचारणा ॥ ४७
प्रान्तरे बिल्वमूले वा श्मशाने वापि साधकः ।
निर्जने वा वने घोरे हर्म्ये वा प्राङ्गणेऽपि वा ॥ ४८ ॥
भित्त्यधो वा महेशानि बलिं दद्याद् विधानतः ।
मांसप्रधानं नैवेद्यं सन्ध्याकाले निवेदयेत् ॥ ४९ ॥
कालि कालीति वक्तव्ये[1] तत्र सा शिवरूपिणी ।
पशुरूपा समायाति परिवारगणैः सह ॥ ५० ॥
भुक्त्वा रौति यदैशान्यां वायव्यां सुरवन्दिते ।
ऐशान्यां सुखसंपत्तिर्वायवी भोगमोक्षदा ॥ ५१ ॥
तदैव मङ्गलं तेषां भवत्येव न संशयः ।
अवश्यमन्नदानेन नियतं[2] तोषयेच्छिवाम् ॥ ५२ ॥
(नित्यश्राद्धं यथा सन्ध्यावन्दनं पितृतर्पणम् ।
तथेयं कुलदेवीनां नित्यता कुलपूजने ॥ ५३ ॥
पशुरूपां शिवां देवीं यो नार्चयति निर्जने) ।
जपपूजाविधानानि यत्किञ्चित् सुकृतानि च ॥ ५४ ॥
गृहीत्वा शापमादाय शिवा रोदिति निर्जने ।
शिवारावेण तस्याशु सर्वं नश्यति निश्चितम् । ५५ ॥
एकया भुज्यते यत्र शिवया देवि भैरवि ।
तत्रैव सर्वदेवानां प्रीतिः परमदुर्लभा ॥ ५६ ॥

---

1 'व्या' ख. पाठः । २ 'नित्यं संतोषयेव' ख. पाठः ।

पशुशक्तिर्नरशक्तिः पक्षिशक्तिश्च भैरवि ।
पूजिता द्विगुणं[1] कर्म साधयेत् परमेश्वरि ॥ ५७ ॥
तेन सर्वं प्रयत्नेन कर्तव्यं पूजनं महत् ।
राजादिभयमापन्ने देशान्तरभयादिके ॥ ५८ ॥
अशुभानि च कर्माणि विचिन्त्य बलिमाहरेत् ।
बलिमन्त्रं प्रवक्ष्यामि सावधानावधारय ॥ ५९ ॥
येन सिद्ध्यति सर्वेशि नास्ति कालस्य निश्चयः ।
आदौ कालीं समुद्धृत्य शिवे चेति ततः परम् ॥ ६० ॥
सर्वरूपधरे पश्चात् आगच्छेति पदद्वयम् ।
मम-शब्दं ततो ब्रूयात् बलि-शब्दं ततः परम् ॥ ६१ ॥
गृह्ण गृह्णेति द्वन्द्वं च वह्निजायावधिर्मनुः ।
मन्त्रेणानेन देवेशि बलिं दत्त्वा मनोहरम् ॥ ६२ ॥
सर्वपापैः प्रमुच्येत सत्यं सत्यं महेश्वरि ।
मन्त्रान्तरं प्रवक्ष्यामि बल्यर्थं यन्मनोहरम् ॥ ६३ ॥
गृह्ण देवि महाभागे शिवे कालाग्निरूपिणि ।
शुभाशुभफलं व्यक्तं ब्रूहि गृह्ण बलिं तव ॥ ६४ ॥
एवमुच्चार्य दातव्यो बलिः कुलजनप्रियः ।
यदा न भुज्यते देवि तदा नैव शुभं भवेत् ॥ ६५ ॥
शुभं यदि भवेत्तत्र भुज्यते तदशेषतः ।
एवं ज्ञात्वा महादेवि शान्तिं स्वस्त्ययनं चरेत् ॥ ६६ ॥
इति ते कथितं देवि नैमित्तिकविधिं शिवे ।
यत्कृते साधको वीरो जायते च निरापदः ॥ ६७ ॥
अथ वक्ष्ये महेशानि शाक्ताचारक्रमं शुभम् ।
शाक्तानां कुलसर्वस्वं जानीहि नगनन्दिनि ॥ ६८ ॥

१ 'त्रिगुणं कर्म सगुणं साधयेद् ध्रुवम्' ख. पाठः ।

प्रातरुत्थाय मन्त्रज्ञः कुलवृक्षं प्रणम्य च ।
शिरःपद्मे गुरुं ध्यात्वा तत्सुधाप्लावितं स्मरेत् ॥ ६९ ॥
मानसैरुपचारैस्तु तमाराध्य निरामयः ।
मूलादिब्रह्मरन्ध्रान्तं मूलविद्यां विभावयेत् ॥ ७० ॥
सूर्यकोटिप्रतीकाशां सुधाप्लावितविग्रहाम् ।
तत्प्रभापटलव्याप्तं स्वशरीरं विचिन्तयेत् ॥ ७१ ॥
श्लेष्मातक-करञ्जाख्य-निम्बाश्वत्थकदम्बकाः ।
बिल्वो वाप्यथवाऽशोक इत्यष्टौ कुलपादपाः ॥ ७२ ॥
एवं ते कथितं भद्रे तन्त्रेऽन्यस्मिन् महेश्वरि ।
बालां वा यौवनोन्मत्तां वृद्धां वा कुलसुन्दरीम् ॥ ७३ ॥
कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत् ।
तासां प्रहारो निन्दा वा कौटिल्यमप्रियं तथा ॥ ७४ ॥
सर्वथा च न कर्तव्यमन्यथा सिद्धिरोधकः ।
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव विभूषणम् ॥ ७५ ॥
स्त्रीसङ्गिना सदा भाव्यमन्यथा स्वस्त्रियामपि ।
विपरीतरता सा तु भाविता हृदयोपरि ॥ ७६ ॥
तद्धस्थावचितं द्रव्यं तद्धस्तावचितं जलम् ।
तद्धस्तावचितं भोज्यं देवताभ्यो निवेदयेत् ॥ ७७ ॥
अन्यमन्त्रपुरस्कारं निन्दां चैव विवर्जयेत् ।
एतद् ब्रह्म तदेवैतन्नाहं वस्तु न सोऽपि च ॥ ७८ ॥
नानाचारं न कर्तव्यं नाचारणमितस्ततः ।
प्रायश्चित्तं भृगोः पातं तीर्थाभिगमनं तथा ॥ ७९ ॥
पिण्डं वेदोदितं न्यासं कौले पञ्च विवर्जयेत् ।
भूतहिंसा न कर्तव्या पशुहिंसा विशेषतः ॥ ८० ॥

बलिदानं विना देव्या हिंसां सर्वत्र वर्जयेत् ।
बलिदानाय या हिंसा न दोषाय प्रकीर्तिता ॥ ८१ ॥
बलिदानाय हिंस्याच्च सदा देवि महापशून् ।
इति वेदविदां देवि सिद्धान्तः सर्वसंमतः ॥ ८२ ॥
वेदसंमतसिद्धान्तः स ममापि च संमतः ।
पशुयागे महेशानि पशुं हन्यान्न संशयः ॥ ८३ ॥
सा हिंसा निन्दिता वेदैर्या च वैधेतरा भवेत् ।
वैधहिंसा च कर्तव्या संशयो नास्ति कश्चन ॥ ८४ ॥
इदानीं शृणु चार्वङ्गि रहस्यं परमाद्भुतम् ।
रहस्यं सर्वदेवीनां समयाचारलक्षणम् ॥ ८५ ॥
येन विना महेशानि न सिध्येन्मन्त्रमुत्तमम् ।
कल्पकोटिजपेनापि तस्य सिद्धिर्न जायते ॥ ८६ ॥
मानवाः कुलशास्त्राणां कुलाचारानुचारिणाम् ।
सिद्धाः स्युर्नास्ति संदेहो वैष्णवाचारतत्पराः ॥ ८७ ॥
परनिन्दासहिष्णुः स्यादुपकाररतः सदा ।
पर्वते विजने वापि निर्जने शून्यमण्डले ॥ ८८ ॥
चतुष्पथे कलामध्ये यदि दैवान्महेश्वरि ।
क्षणं ध्यात्वा मनुं जप्त्वा नत्वा गच्छेद्यथासुखम् ॥ ८९ ॥
गृध्रं वीक्ष्य महाकालीं नमस्कुर्यादतन्द्रितः ।
क्षेमङ्करीं तथा वीक्ष्य जम्बुकीं यमदूतिकाम् ॥ ९० ॥
कुररं श्येनभूकाकौ कृष्णमार्जारमेव च ।
कृशोदरि महाचण्डे मुक्तकेशि बलिप्रिये ॥ ९१ ॥
कुलाचारप्रसन्नास्ये नमस्ते शंकरप्रिये ।
श्मशाने च शवं दृष्ट्वा प्रदक्षिणमनुव्रजन् ॥ ९२ ॥

प्रणम्यानेन मनुना मन्त्री गुरुत्वमवाप्नुयात् ।
घोरदंष्ट्रे करालास्ये[1] किटि-शब्दनिनादिनि ॥ ९३ ॥
गुरुघोररवास्फाले नमस्ते चितिवासिनि ।
रक्तवस्त्रां रक्तपुष्पां विलोक्य त्रिपुराम्बिकाम् ॥ ९४ ॥
प्रणम्य दण्डवद्भूमाविम मन्त्रं पठेन्नरः ।
बन्धूकपुष्पसंकाशे त्रिपुरे भयनाशिनि ॥ ९५ ॥
भाग्योदयसमुत्पन्ने नमस्ते वरवर्णिनि ।
कृष्णवर्णं तथा पुष्पं राजानं राजपुत्रकम् ॥ ९६ ॥
हस्त्यश्वरथशस्त्राणि करवीरं तथा शिवम्[2] ।
महिषं कुलनाथं च दृष्ट्वा महिषमर्दिनीम् ॥ ९७ ॥
प्रणम्य जयदुर्गां वा स तु विघ्नैर्न लिप्यते ।
जय देवि जगद्धात्रि त्रिपुराद्ये त्रिदेवते ॥ ९८ ॥
भक्तेभ्यो वरदे देवि महिषघ्नि नमोऽस्तु ते ।
मद्यभाण्डं समालोक्य मत्स्यमांसं वरस्त्रियम् ॥ ९९ ॥
दृष्ट्वा च भैरवीं देवीं प्रणम्य विन्यसे[3]न्मनुम् ।
घोरविघ्नविनाशाय कुलाचारसमृद्धये ॥ १०० ॥
नमामि वरदे देवि मुण्डमालाविभूषिते ।
रक्तधारासमाकीर्णे वरदे[4] त्वां नमाम्यहम् ॥ १०१ ॥
सर्वविघ्नहरे देवि नमस्ते हरवल्लभे ।
एतेषां दर्शनेनैव यदि नैवं प्रवर्तते ॥ १०२ ॥
शक्तिमन्त्रं पुरस्कृत्य तस्य सिद्धिर्न जायते ।
एतेषां हिंसनोच्चाटमारणं वागुरादिभिः ॥ १०३ ॥
क्रियते येन पापात्मा मद्भक्तः स कथं भवेत् ।
प्रधानांशसमुद्भूता एते कुलजनप्रिये ॥ १०४ ॥

1 'कठोरास्ये' ख. पाठः । 2 'फलकान् वीरपूरुषान्' ख. पाठः । 3 'विस्मृशेत' ख. पाठः । 4 'शवदने' ख. पाठः ।

डाकिन्यश्च महादेवि वडुलाः सर्वतो द्विजाः ।
तस्यासिद्धिप्रसादेन डाकिनीदर्शनं यदि ॥ १०५ ॥
अथवा शालवानां च नक्षत्राणां विशेषतः ।
वटुकानां देवतानां तस्य सिद्धिश्च जायते ॥ १०६ ॥
पयोधरां घनश्यामां षोडशाब्दां मनोहराम् ।
रक्तवस्त्रां कुमारीं च प्रपूज्य च मन्त्रं जपेत् ॥ १०७ ॥
अष्टोत्तरशतं जप्त्वा सिद्धिमाप्नोति निश्चितम् ।
ततः सिद्धमनुर्मन्त्री सर्वकर्माणि साधयेत् ॥ १०८ ॥
वेदान्ते नास्ति देवेशि द्वितीयापरसंहिता ।
तस्यां चावाह्य विधिवत् कालिकां भुवनेश्वरीम् ॥ १०९ ॥
सम्भूतिं कार्यहितात् सर्वकामफलप्रदाम् ।
स्तुत्वा चावाह्य यत्नेन पूजयेत् परदेवताम् ॥ ११० ॥
चतुर्भुजां महादेवीं मुण्डमालाविभूषिताम् ।
अभयं वरदं खड्गं मुण्डमालावरां पराम् ॥ १११ ॥

श्रीदेव्युवाच

भगवन् सर्वधर्मज्ञ सर्वशास्त्रार्थपारग ।
कालिकाया महादेव्याः पूजनं विस्तरेण तु ॥ ११२ ॥
पुनर्वाच्यं पुरश्चर्यं मूलाचारबहिष्क्रियाम् ।
कथयस्व प्रसादेन येन तुष्यामि शंकर ॥ ११३ ॥

(श्रीभैरव उवाच) ।

मद्यस्यादि समाचर्ये ह्यस्यादित्यागमाचरेत् ।
आदौ च आसनं कृत्वा पूजयेत् परदेवताम् ॥ ११४ ॥
अस्यां तिथौ महादेवि कालिकां यः प्रपूजयेत् ।
तस्य सर्वार्थसिद्धिः स्यात् सर्वज्ञतुल्यो भवेत् ॥ ११५ ॥

राजानोऽन्ये महेशानि दासत्वं प्राप्नुयुर्लघु ।
न पूजयति चेत्कालीं दम्भाद्वाप्यथ भैरवि ॥ ११६ ॥
सर्वनाशं करोत्याशु क्रुद्धा भवति कालिका ।
तस्मात् सर्वप्रयत्नेन महाविभवविस्तरैः ॥ ११७ ॥
पूजयेत् परमेशानीं सर्वकामसमृद्धिदाम् ।
महापूजां महादेवि यदि कुर्याद्वरानने ॥ ११८ ॥
तदैव महती सिद्धिर्भवत्येव न संशयः ।
चतुर्वर्गस्य कामी हि पूजयेत् कालिकां मुदा ॥ ११६ ॥
प्राणप्रतिष्ठामन्त्रेण प्राणान् संस्थापयेद् बुधः ।
न्यासजालं महादेव्याः शरीरे विनिवेश्य वै ॥ १२० ॥
एवं च आत्मनो देहे न्यासजालं निवेशयेत् ।
भूतशुद्धिं ततः कुर्यात् प्राणायामं चरेत् त्रिधा ॥ १२१ ॥
अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ १२२ ॥
विघ्नानुत्सार्य देवेशि पद्मं निर्माय यागवित् ।
देवीसंमुखतो देवि ततः पूजां समारभेत् ॥ १२३ ॥
रात्रौ गते तु प्रहरे प्रथमे सुरवन्दिते[1] ।
आसनं प्रथमं दद्यात् स्वागतं तदनन्तरम् ॥ १२४ ॥
पाद्यार्घ्याचमनीयं च मधुपर्कं ततः परम् ।
तथा चाचमनीयं च स्नानीयं च ततः परम् ॥ १२५ ॥
वसनं रक्तकं दद्याद् रजताभरणं तथा ।
गन्धपुष्पे महादेवि धूपदीपौ ततः परम् ॥ १२६ ॥
नैवेद्यं त्रिविधं दद्यात् सुस्वादु सुमनोहरम् ।
ताम्बूलं परमं हृद्यं दद्याद् देव्यै मनोहरम् ॥ १२७ ॥

१ 'सुरगणार्चिते' इति पाठान्तरम् ।

बलिदानं महादेव्यै कुर्यात् साधकसत्तमः ।
छागं दद्यात्तथा मेषं महिषं गोधिकां तथा ॥ १२८ ॥
कपोतं च महेशानि दद्याद् देव्यै मनोहरम् ।
मधूदकं महादेव्यै शर्करादिविनिर्मितम् ॥ १२९ ॥
ततः शत्रुबलिं राजा दद्यात् क्षीरेण निर्मितम् ।
स्वयं छिन्द्यात क्रोधदृष्ट्या प्रहारजनकेन च ॥ १३० ॥
कोपेन च सकृद् देवि सत्यं सत्यं गणेश्वरि ।
प्राणप्रतिष्ठां कृत्वा वै शत्रुनाम्ना महेश्वरि ॥ १३१ ॥
शत्रुक्षयो महादेवि भवत्येव न संशयः ।
मन्त्रं जप्त्वा विधानेन नमस्कुर्याच्छुचिस्मिते ॥ १३२ ॥
वाद्यभाण्डं निवेद्येव सर्वयत्नेन देशिकः ।
ततः स साधको वीरो जायते नात्र संशयः ॥ १३३ ॥
सन्देशं परमं दद्याद् भृष्टद्रव्येण संयुतम् ।
गुडक्षीरं मधु द्राक्षामिक्षुदण्डं पुरातनम ॥ १३४ ॥
रम्भाफलं बीजपूरं तथा च नारिकेलकम् ।
मधुयुक्तं नारिकेलं शस्यं दद्यान्महेश्वरि ॥ १३५ ॥
अवश्यं दापयेत् तत्तु देवीतोषो महान् भवेत् ।
गुप्तमन्त्रं महेशानि जानीहि नगनन्दिनि ॥ १३६ ॥
भुवनेशी-द्वयं भद्रे कूर्चयुग्मं ततः परम् ।[1]
निजबीजद्वयं देवि दक्षिणे कालिकेति च ॥ १३७ ॥
संहारक्रमयोगेन पूर्वबीजानि चोच्चरेत् ।
वेदादिश्च महामन्त्रो वह्निजायावधिः स्मृतः ॥ १३८ ॥
अस्मात् परतरं नास्ति कालीमन्त्रः परात्परः ।
कल्पपादपनामायं भजतां कामदो मनुः ॥ १३९ ॥

[1] मन्त्रस्तु ॐह्रींह्रींहूंहूंक्रींक्रीं दक्षिणे कालिके क्रींक्रींहूंहूं ह्रींह्रीं स्वाहा ॥

अतिप्रियत्वात् कथितो न प्रकाश्यं वरानने ।
गुप्तबीजमिदं काल्याः सर्वतन्त्रेषु गोपितम् ॥ १४० ॥
वश्यादि च महेशानि अनेन जायतेऽचिरात् ।
अष्टोत्तरशतेनापि मूलाधारवहिःक्रियाम् ॥ १४१ ॥
कर्तुं च शक्यते देवि सिद्धो भवति तत्क्षणात् ।
कलौ काली तथा तारा चान्नपूर्णा च सुन्दरी ॥ १४२ ॥
एतासां सिद्धविद्यानां श्रीमन्त्रग्रहणादपि ।
शिवत्वं जायते सुभ्रु संशयो नास्ति कश्चन ॥ १४३ ॥
शीघ्रं सिद्ध्यन्ति मन्त्राश्च सत्यं सत्यं महेश्वरि ।
माघे मास्यसिते पक्षे रटन्त्याख्या चतुर्दशी ॥ १४४
तस्यां संपूजयेत् तारां महाविभवविस्तरैः ।
चक्रवर्ती महाराजा भवत्येव न संशयः ॥ १४५ ॥
मार्गे मासि सिते पक्षे सप्तमी रविवल्लभा ।
अन्नदां पूजयेद् भक्त्या पुत्रपौत्रसमन्वितः ॥ १४६ ॥
लक्ष्मीः स्थिरायतेऽवश्यं यावच्च सचराचरम् ।
तावत्तस्य गृहे लक्ष्मीर्विकृत्यं परिवर्ज्य च ॥ १४७ ॥
निश्चला च भवेद् देवि सत्यं सत्यं गणेश्वरि ।
पूजा चास्या महेशानि कथिता तव सन्निधौ ॥ १४८ ॥
अन्नदाकल्पके सम्यग् जानीहि गणसुन्दरि ।
कार्तिके शुक्लपक्षस्य नवमी या सिता भवेत् ॥ १४९ ॥
तस्यां पूज्या महेशानि सुन्दरी परदेवता ।
सुन्दर्याः पटले सम्यक् पूजा च कथिता शुभे ॥ १५० ॥
इति ते कथितं किञ्चित् नैमित्तं परमं शुभम् ।
अन्यद् वक्ष्यामि देवेशि जायन्ते च निरापदः ॥ १५१ ॥

इदानीं कथयिष्यामि काम्यानुष्ठानमुत्तमम् ।
येनैव महता देवि सर्वविद्यामयो भवेत् ॥ १५२ ॥
होमतर्पणपूजा च भावना जप एव च ।
मन्त्रस्य साधनं चैव मारणोच्चाटने तथा ॥ १५३ ॥
एतानि काम्यकर्माणि कुरुते साधकः सदा ।
अर्धरात्रे शरत्कालो हेमन्तः स्यात् प्रभातके ॥ १५४ ॥
पूर्वाह्णे च वसन्तः स्यात् मध्याह्ने ग्रीष्म एव च ।
प्रावृट्कालोऽपराह्णे स्यात् प्रदोषः शिशिरः स्मृतः ॥ १५५ ॥
उषायोगे च हेमन्तः प्रभाते शिशिरागमः ।
प्रहरार्धे वसन्तश्च ग्रीष्मो मध्यन्दिनान्तरे ॥ १५६ ॥
तुर्ययामे च वर्षाख्या शरदस्तंगते रवौ ।
एतत्ते कथितं सुभ्रु कालानां नियमं शृणु ॥ १५७ ॥
एवं ज्ञात्वा महेशानि सर्वकर्माणि कारयेत् ।
शान्तिं पुष्टिं तथा वश्यमाकर्षोच्चाटनादिकम् ॥ १५८ ॥
षट्कर्माणि प्रयुक्तानि निग्रहो मारणं तथा ।
रोगकृत्याद्ययादीनां निरासः शान्तिरीरिता ॥ १५९ ॥
पुष्टिर्धनजनादीनां वश्यादीनां च कथ्यते ।
जनसंवननं चैवाकर्षणमात्मना कृतम् ॥ १६० ।
उच्चाटनादिकरणं निग्रहः परिकीर्तितः ।
जनानां प्राणहरणं मारणं परिकीर्तितम् ॥ १६१ ॥
सूर्योदयं समारभ्य घटिकादशकं क्रमात् ।
ऋतवः स्युर्वसन्ताद्याश्चाहोरात्रं दिने दिने ॥ १६२ ॥
वसन्तग्रीष्मवर्षाख्यशरद्धेमन्तशैशिराः ।
हेमन्तो शान्तिके प्रोक्तो वसन्तो वश्यकर्मणि ॥ १६३ ॥

शिशिरे स्तम्भनं प्रोक्तं विद्वेषे ग्रीष्म ईरितः ।
प्रावृडुच्चाटने शस्ता शरन्मारणकर्मणि ॥ १६४ ॥
वश्ये चाकर्षणे चैव रक्तवर्णं विभावयेत् ।
निर्विषीकरणे शान्तौ पुष्टौ चाप्यायने सितम् ॥ १६५ ॥
पीतं स्तम्भनकार्येषु धूम्रमुच्चाटने भवेत् ।
उन्मादे शक्रगोपाभं कृष्णवर्णाभकं मृतौ ॥ १६६ ॥
उत्थितं मारणे ध्येयं सुप्तमुच्चाटने स्मृतम् ।
उपविष्टं सुरेशानि वश्यादौ परिचिन्तयेत् ॥ १६७ ॥
आसीनं श्वेतवर्णं तु ज्ञेयं तु शान्ति(सात्वि)के शिवे ।
वामपार्श्वस्थितं कृष्णं तामसं परिकीर्तितम् ॥ १६८ ॥
सात्त्विकं मोक्षकामानां राजसं राज्यमिच्छताम् ।
तामसं शत्रुनाशार्थं सर्वव्याधिनिवारकम् ॥ १६९ ॥
मारणे विषसंहारे भूतग्रहनिवारणे ।
उच्चाटने च विद्वेषे पञ्चवर्णं प्रयुज्यते ॥ १७० ॥
मन्त्रान्ते नामसंस्थानं योग इत्यभिधीयते ।
शान्तिके पौष्टिके वश्ये प्रायश्चित्तविशोधने ॥ १७१ ॥
मोहने दीपने योगं प्रयुञ्जन्ति मनीषिणः ।
स्तम्भनोच्चाटनोच्छेदविद्वेषेषु स चोच्यते ॥ १७२ ॥
नाम्न आद्यन्तमध्ये च मन्त्रसांमुख्य उच्यते ।
मन्त्राभिमुख्यकरणे सर्वपापप्रणाशने ॥ १७३ ॥
ज्वर एष विषकृत्याशान्तिके स च उच्यते ।
संमीलने स एवाथ मन्त्राणामक्षराणि च ॥ १७४ ॥
एकैकान्तरितं मन्त्रग्रथनं तत् प्रकीर्तितम् ।
यच्छान्तिके विधातव्यं नामाद्यन्ते यदा मनुः ॥ १७५ ॥

तत्संपुटं भवेत् तत्तु कीलकं परिभाषितम् ।
स्तम्भे मृत्युजये द्विष्टौ रक्षणादिषु संपुटः ॥ १७६ ॥
द्वे द्वे मन्त्राक्षरे यत्र एकैकं साध्यनामकम् ।
विदर्भ एष विज्ञेयो मुनिभिस्तन्त्रवेदिभिः ॥ १७७ ॥
वह्निकार्ये जपेत् स्वाहा नमः सर्वत्र चार्चने ।
शान्तिपुष्टिवशद्वेषमारणोच्चाटने तथा ॥ १७८ ॥
सुधा स्वाहा वषट् हुं च वौषट् फटं क्रमान् न्यसेत् ।
पद्मासनं महादेवि पौष्टिके समुदाहृतम् ॥ १७९ ॥
वश्ये चैव महेशानि तथा च शान्तिके शिवे ।
आसनं स्वस्तिकं प्रोक्तं साक्षात् सिद्धिकरं तथा ॥ १८० ॥
आकृष्टौ च महेशानि कम्बलं समुदाहृतम् ।
वीरासनं महेशानि विद्वेषे समुदाहृतम् ॥ १८१ ॥
उच्चाटने मारणे च वीरासनं प्रशस्यते ।
शान्तिपौष्टिकवश्ये च सुन्दरी शोभनाशया ॥ १८२ ॥
सर्वाभरणसंदीप्ता प्राप्तकाममनोरथा ।
ध्यातव्या देवता सम्यक् सुप्रसन्नाननाम्बुजा ॥ १८३ ॥
आकर्षणे च तद्वत् स्यात् उच्चाटने प्रशस्यते ।
साध्य आकर्षणे द्वेषे प्रथितं तन्त्रवेदिभिः ॥ १८४ ॥
वर्जमानैर्जनैर्दान्तैर्ग्रथितस्तक्षकेण च ।
उकारवयसाविष्टौ यक्ष उच्चाटने तथा ॥ १८५ ॥
शिलयाक्रान्तितस्तत्त्वं तृणपानादिषु स्मरेत्(?) ।
इदानीं शृणु चार्वङ्गि तिथीनां नियमं शुभे ॥ १८६ ॥
पञ्चमी च द्वितीया च तृतीया सप्तमी तथा ।
बुधेज्यवारसंयुक्ता शान्तिकर्मणि पूजिता ॥ १८७ ॥

सप्तमी पौष्टिके शस्ता अष्टमी नवमी तथा ।
दशम्येकादशी चैव भानुशुक्रादिसंयुता ॥ १८८ ॥
आकर्षणेऽप्यमावास्या नवमी प्रतिपत्तथा ।
पौर्णमासी मन्दभानुयुक्ता विद्वेषकर्मणि ॥ १८९ ॥
कृष्णा चतुर्दशी तद्वदष्टमी मन्दवारका ।
उच्चाटने तिथिः शस्ता प्रदोषे च विशेषतः ॥ १९० ॥
चतुर्दश्यष्टमी कृष्णा अमावास्या तथैव च ।
मन्दसौरादिनोपेता शस्ता मारणकर्मणि ॥ १९१ ॥
बुधचन्द्रादिनोपेता पञ्चमी दशमी तथा ।
पौर्णमासी च विज्ञेया तिथिः स्तम्भनकर्मणि ॥ १९२ ॥
शुभग्रहोदये कुर्यादशुभा अशुभोदये ।
रौद्रकर्माणि रिक्तार्के मृत्युयोगे च मारणम् ॥ १९३ ॥
होमतर्पणपूजा च भावना जप एव च ।
मन्त्रस्य धारणा चैव मारणोत्सादने तथा ॥ १९४ ॥
एतानि काम्यकर्माणि प्रयोगेऽन्यत् समर्चयेत् ।
अथान्यत् संप्रवक्ष्यामि वशीकरणमुत्तमम् ॥ १९५ ॥
येन विज्ञातमात्रेण मन्त्राः सिद्ध्यन्ति तत्क्षणात् ।
प्रतिमां कारयेद् देवि पलेन रजतस्य च ॥ १९६ ॥
पलार्धेन महेशानि साध्यस्य प्रतिमां शिवे ।
हरितालं पलार्धं च हरिद्राचूर्णकं तथा ॥ १९७ ॥
गर्तं कृत्वा सार्धहस्तं तत्र निक्षिप्य सुन्दरि ।
रक्तासनं तत्र दत्त्वा वसेत् तद्गतमानसः ॥ १९८ ॥
चतुर्दिक्षु महेशानि पताकां विनिवेशयेत् ।
रक्तासने चोपविश्य पूर्वास्यो जपमाचरेत् ॥ १९९ ॥

पूजाया नियमं देवि जानीहि नगनन्दिनि ।
तिलपूर्णं घटं तत्र स्थापयेत् देवि देशिकः ॥ २०० ॥
ताम्रपात्रं ततो न्यस्य प्रतिष्ठामाचरेत् ततः ।
प्राणप्रतिष्ठामन्त्रेण प्राणान् संस्थापयेद् बुधः ॥ २०१ ॥
अधः कृत्वा पूजयित्वा प्रवालमालया जपेत् ।
दशसाहस्रजप्येन प्रयोगार्हो भवेत् ततः ॥ २०२ ॥
प्रणवं पूर्वमुच्चार्य मायाबीजं द्वितीयकम् ।
कान्तं च लाकिनीयुक्तं वामकर्णेन्दुभूषितम् ॥ २०३ ॥
ततो रक्तपदं ब्रूयाच्चामुण्डे तदनन्तरम् ।
साध्यनाम ततो न्यस्य वशमानय तत्परम् ॥ २०४ ॥
वह्निजायावधिर्मन्त्रो जपेद् दशसहस्रकम् ।
दशांशादिप्रमाणेन होमादींश्च समाचरेत् ॥ २०५ ॥
प्रातः स्नात्वा शुचिर्भूत्वा हविष्याशी जितेन्द्रियः ।
प्रातः कालं समारभ्य जपेद् मध्यन्दिनावधि ॥ २०६ ॥
जपे समाप्ते देवेशि हुनेद् दिने दिने शुभे ।
जातीकुसुमहोमेन वशयेन्नात्र संशयः ॥ २०७ ॥
कर्पूरमिश्रितैस्तोयैस्तर्पयेत् परदेवताम् ।
पूर्वं प्रणवमुद्धृत्य चामुण्डां प्रवदेत् ततः ॥ २०८ ॥
तर्पयाम्यग्निजायान्तं मन्त्रं जानीहि भैरवि ।
अनेनैव विधानेन सन्तर्प्य परदेवताम् ॥ २०९ ॥
सिद्धिप्रयोगो देवेशि जायते नात्र संशयः ।
अभिषेकं ततः कुर्याद् भैरवि प्राणवल्लभे ॥ २१० ॥
प्रणवं च महेशानि चामुण्डां तदनन्तरम् ।
अभिषिञ्चामि तत्पश्चात् हृदन्तेनाभिषेचयेत् ॥ २११ ॥

तद्दशांशेन देवेशि ब्राह्मणान् भोजयेत् तदा ।
एवं कृते महेशानि वशीकरणमुत्तमम् ॥ २१२ ॥
जायते नात्र संदेहः सत्यं सुरगणार्चिते ।
कामतुल्यश्च नारीणां रिपूणां शमनोपमः ॥ २१३ ॥
यावज्जीवितपर्यन्तं स्मरबाण इवेश्वरि ।
जायते नात्र संदेहः सत्यं सुरगणार्चिते ॥ २१४ ॥
श्वेतापराजितामूलं पेषयेद् रोचनायुतम् ।
शतेन मन्त्रितं कृत्वा तिलकं कारयेत् ततः ॥ २१५ ॥
वशयेद् नात्र सन्देहः सत्यं सत्यं महेश्वरि ।
चन्द्रसूर्यौ यदि वृथा तदा निष्फलभाग् भवेत् ॥ २१६ ॥
रक्तवस्त्रेण चामुण्डां तोषयेद् बहुयत्नतः ।
सुवर्णदक्षिणा देया वित्तानुसारतः प्रिये ॥ २१७ ॥
आद्यन्ते महतीं पूजां कुर्यात् तस्य वरानने ।
पञ्चदिनप्रयोगेण राजानं वशमानयेत् ॥ २१८ ॥
तव प्रीत्यै महादेवि कथितं भुवि दुर्लभम् ।
विद्वेषणं विशेषेण शृणुष्वैकमनाः प्रिये ॥ २१९ ॥
करञ्जकविषेणैव तथा धत्तूरकेण च ।
काकोलूकौ सदा लेख्यौ भूर्जपत्रे महेश्वरि ॥ २२० ॥
साध्यानां नामसहितं मन्त्रं संलिख्य साधकः ।
एतयोर्यादृशं वैरं तादृशं चामुकयोर्भवेत् ॥ २२१ ॥
वह्निजायावधिर्मन्त्रः सर्वविद्वेषकारकः ।
महाकाली देवता च पूजा तस्याः शुभप्रदा ॥ २२२ ॥
एवं सहस्रमानेन जपं कुर्याच्छुचिस्मिते ।
मारणं सविशेषं च शृणुष्वैकमनाः प्रिये ॥ २२३ ॥

निहत्य कृष्णमार्जारं मस्तकं तत्र तं नयेत् ।
सिन्दूरेण समायुक्तं कुर्यात् साधकसत्तमः ॥ २२४ ॥
तज्जिह्वायां महादेवि साध्यनाम लिखेच्छिवे ।
साध्यनाम लिखित्वा तु कालीमन्त्रं जपेन्मुदा ॥ २२५ ॥
निजबीजेन घटितमन्त्रं प्रजपेत् ततः ।
दशसाहस्रजापेन मारयेदरिमग्रतः ॥ २२६ ॥
श्मशानकालिकां तत्र चावाह्य पूजयेच्छुभे ।
लौहालङ्कारसंयुक्तं वस्त्रं देव्यै प्रदापयेत् ॥ २२७ ॥
दक्षिणास्यो जपेद् मन्त्रं ततः सिद्धो भवेन्मनुः ।
अन्नं पक्त्वा महादेवि निर्जने दापयेत् प्रिये ॥ २२८ ॥
अर्धरात्रे बलिं दत्त्वा खनेद् वैरिगृहे यदि ।
सप्ताहमध्ये देवेशि शत्रुर्याति यमालयम् ॥ २२९ ॥
इति ते कथितं देवि सारात् सारतरं मतम् ।
तव स्नेहाद्वरारोहे प्रकाशितमिदं पुरः ॥ २३० ॥
शान्तिकं शृणु सर्वज्ञे येन जीवति साधकः ।
उर्वशीं प्रथमं नीत्वा युगान्तकारकं परम् ॥ २३१ ॥
स्तनद्वयेन संयुक्ता धूमिनी–त्रितयं ततः ।
अस्य मन्त्रस्य देवेशि सहस्राष्टप्रमाणतः ॥ २३२ ॥
जपं कुर्याद् महेशानि अन्नपूर्णा च देवता ।
पूजयेद् विविधैर्भक्ष्यैर्नानारससमन्वितैः ॥ २३३ ॥
चर्व्यं चोष्यं तथा लेह्यं द्रव्यं दद्यान्मनोहरम् ।
दशांशादिप्रमाणेन होमादींश्च समाचरेत् ॥ २३४ ॥
पद्मपुष्पस्य होमेन शान्तिर्भवति सुन्दरि ।
मधुना तर्पयेद् देवीमन्नपूर्णां परां गतिम् ॥ २३५ ॥

प्रथमेऽहनि देवेशि जलेन पूरयेद् घटम् ।
तद्घटे पूजयेद् देवीं पूज्यात्वाह्य सुरेश्वरीम् ॥ २३६ ॥
मन्त्रेणानेन देवेशि यदि कुर्यात् प्रयोगकम् ।
सर्वव्याधिर्विनश्येत नात्र कार्या विचारणा ॥ २३७ ॥
रहस्यं शृणु देवेशि [1]येन सत्य(युगं?पुरं)व्रजेत् ।
साधनादि महेशानि बहुधा कथितं मया ॥ २३८ ॥
पुनः केन प्रकारेण ज्योतीरूपां विलोकयेत् ।
तन्मे शृणु वरारोहे कृपया परमेश्वरि ॥ २३९ ॥
शृणु साध्वि महाभागे सर्वज्ञानान्तरस्थितम् ।
वैष्णवे गाणपत्ये च शैवे वा शाम्भवेऽपि वा ॥ २४० ॥
योगे संन्यासधर्मे वा कौलो धर्मः प्रशस्यते ।
कुलीनधर्ममाश्रित्य जपेद् रात्रिन्दिवं शिवे ॥ २४१ ॥
नद्यादौ विजने शून्ये गेहे विल्वतले तटे ।
लतासंवेष्टितस्थाने शुद्धभावेन तां भजेत् ॥ २४२ ॥
श्मशाने निर्जने वापि सदा तिष्ठति सुन्दरी ।
विकाररहिताश्चेत् त्वां भजन्ते सिद्धिकामिनः ॥ २४३ ॥
तदा त्वं साधकानां च भविता दृष्टिगोचरा ।
साधनं च प्रवक्ष्यामि कथितं यत् तपोधने ॥ २४४ ॥
यतिभावेन वा देवि राजभावेन वा शिवे ।
अभेददर्शी संभूय त्वां प्रपश्यति साधकः ॥ २४५ ॥
तीर्थपूर्णं नवघटं कुजवारेऽष्टमी यदि ।
निधाय तत्र विधिवत् पूजां कृत्वा विधानतः ॥ २४६ ॥
विषिच्य वेदिकां तत्र तस्योपरि शुभासनम् ।
आस्तीर्य निवसेत् तत्र ज्योतिर्मन्त्रपुरःसरम् ॥ २४७ ॥

[1] 'येन प्रत्यक्षतांव्रजेत्' इति पाठान्तरम् ।

फुत्कारेण चतुर्दिक्षु तन्मन्त्रमुच्चरन् धिया ।
ध्यायेच्च सततं देवि तव रूपं प्रयत्नतः ॥ २४८ ॥
द्विभुजां सुन्दरीं श्यामां नानारत्नविभूषिताम् ।
रक्तवस्त्रां स्मितमुखीं मातृवत् परिपालिनीम् ॥ २४९ ॥
भैरवीं घोररूपां त्वां तदा जानाति भैरवि ।
नासारन्ध्रोपरि ध्यायेत् तव तेजः स्वचक्षुषा ॥ २५० ॥
कूर्चमध्येऽथवा पश्येत् तव ज्योतिरनामयम् ।
चन्द्रकोटिप्रभं शीतं रविकोटिसमं खरम् ॥ २५१ ॥
उत्तुङ्गं च महाकालं स्वप्रकाशाचलं गुरुम् ।
धीरेण चेतसा धार्यं काले काले विधानतः ॥ २५२ ॥
शून्यालये प्राङ्गणे वा वीथिकापालिकासु च ।
शृङ्गाट–हट्ट–शालेषु यथारुचि करोत्विति ॥ २५३ ॥
किन्तु देवि विना हेतुं चेतः कस्मात् प्रसीदति ।
अन्तःशुद्धिर्मनःशुद्धिर्हेतुशून्या कथं भवेत् ॥ २५४ ॥
नाचारे हरति प्रीतिर्विगीते नास्ति मे रुचिः ।
ततो हेतुं समाधाय सुगोप्यं जपमाचरेत् ॥ २५५ ॥
सुरा हेतुः कारणं च परमामृतमेव च ।
ज्ञानदा शुभदा तीर्थं मदिरा मोदिनी सती ॥ २५६ ॥
शुण्डा प्रचण्डकुल्याङ्गा पावनी तारिणीति च ।
नव नामानि गोप्यानि जानीहि कुलभैरवि ॥ २५७ ॥
तत्स्वरूपां मदोन्मत्तां मदिरां शङ्खभूषणाम् ।
ध्यायेत् प्रतिमुखीं स्मेरस्वप(सुद)तीं शुभदां शुभाम् ॥ २५८ ॥
न च मे स्वापमापेथा सदा शान्तेन चेतसा ।
भिक्षुत्वं राजता वापि तवाश्रया युगे युगे ॥ २५९ ॥

हेतुशून्या क्रिया नष्टा नान्तःशुद्धिर्नवा सुखम् ।
देहं व्यर्थं विजानीहि देवि त्वत्साधनं विना ॥ २६० ॥
साधनं हि वृथा देवि हेतुवादं तथा शृणु ।
भैरवैर्हेतुपतिभिर्मार्गैः सेव्यं च शङ्करि ॥ २६१ ॥
मिलित्वा पर्वतेऽरण्ये यो वै संयमितात्मना ।
एकाकी नैव मद्यान्नं स्त्रीभिः (?) स्तोत्रं सुवर्णितम् ॥ २६२ ॥
पञ्चभिर्दशभिर्वापि जापकस्य सुसंयुतम् ।
समभावे जपेद् देवि नियतं द्वित्रिकैः सह ॥ २६३ ॥
किञ्चिद्ध्यानेन तत्सर्वं न द्विधा किञ्चिदीरितम् ।
स्मृत्वा ततं ब्रह्ममयं भ्रान्तिरत्र न जायते ॥ २६४ ॥
स्वीकृत्य त्वमपि ध्यायेस्तदा द्रक्ष्यसि सुन्दरि ।
एवं ध्यात्वा महेशानि प्रसन्नं यदि मे मनः ॥ २६५ ॥
शोधनं संप्रवक्ष्यामि ज्ञानात् सार्वज्ञ्यदायकम् ।
घटं पुरो निधायादौ त्रिर्जपन् मूलमुच्चरेत् ॥ २६६ ॥
योनिमुद्रां प्रदर्श्याथ शुभमेनमुदीरयेत् ।
नमस्ते ज्ञानदे शुद्धे शुद्धिभावविनिश्चिते ॥ २६७ ॥
ज्योतीरूपे ध्वान्तहरे वरदेऽमृतरूपिणि ।
अविद्यान्तरसंस्थाने महापातकनाशिनि ॥ २६८ ॥
सर्वपुण्यप्रसवने सर्वदामृतमानसे ।
नमस्तुभ्यं नमस्तुभ्यं प्रसीद परमेश्वरि ॥ २६९ ॥
ऋद्धिं देहि मनः शुद्धिं(देहि)दुद्रुव(?)ते नमः ।
चराचरधृते पुण्ये धृतिदे धृतिनाशिनि ॥ २७० ॥
सुरासुरनरैः सेव्ये व्यामोहं हर मेऽनघे ।
अरुणाक्षि विशालाक्षि विलक्षे साक्षिणि स्वयम् ॥ २७१ ॥

दिव्यमाल्यपरीधाने कुलजे प्रीयतां मयि ।
ततःसंचयमाचिन्त्यै चिदानन्दमये परे ॥ २७२ ॥
नमस्ते कुलधर्मायै कालिकायै हरे रमे ।
ऐं क्लीं हूं ह्रीं दिव्यरूपे महामाये महेश्वरि ॥ २७३ ॥
ह्रींकारात् सिद्धिमाप्नोति बुद्धिं देहि यशस्विनि ।
अमृतत्वं प्रयाहित्र निधेहि सिद्धिमुत्तमाम् ॥ २७४ ॥
अपारेऽसारसंसारे तारे कामदुघेऽनघे ।
सर्वदेवगणाश्रीतेऽपरिमेयगुणाश्रये ॥ २७५ ॥
ब्रह्मानन्दपरानन्दे नमस्तेऽस्तु पुनः पुनः ।
चक्षुर्भ्रान्तं मनोभ्रान्तं छिन्धि देवि सुरेश्वरि । २७६ ॥
कुलाचारप्रसन्ना त्वं पुनीहि ब्रह्मवादिनि ।
सत्यानन्दमयि श्रीदे कमले शूलधारिणि ॥ २७७ ॥
सुकृतो विश्वसेव्ये प्रभूतिद्युतिमानसे ।
नमो नित्यं जयायै ते परायै ते नमाम्यहम् ॥ २७८ ॥
शुद्धाचाररते गोप्ये पशूनां पाशकण्टके ।
यथा भ्रान्ताद्विमुच्येऽहं तथा कुरु सुरार्चिते ॥ २७९ ॥
एवं स्तुत्वा महादेवि मूलेनैव विशोधयेत् ।
ॐ एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ॥
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ २८० ॥
ॐ सूर्यमण्डलसंभूते वरुणालयसंभवे ।
अमाबीजमये देवि शुक्रशापाद्विमुच्यताम् ॥ २८१ ॥
ॐ वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन देवेशि ब्रह्महत्यां व्यपोहतु ॥ २८२ ॥
ततस्तां पुरतः कृत्वा यथोक्तं जपमाचरेत् ।
दिने दिने महादेवि यदि पूजां करोति हि ॥ २८३ ॥

अवश्यमेव तद्रूपं जानीयात् साधकोत्तमः ।
शवानां साधनं देवि बहुधा कथितं मया ॥ २८४ ॥
वीरभावेन तद् देवि हेतुहीनं वृथागतम् ।
इदानीं शवरूपेण ध्यायेत् त्वां सततं शिवे ॥ २८५ ॥
तदा क्रीडति(सि) मूर्त्या च शवोपरि त्रपान्विता ।
ततो नित्यानुरागेण यद्भावाय प्रकल्पसे ॥ २८६ ॥
महानिशायां ब्राह्म्ये वा मुहूर्ते ध्यानतत्परः ।
त्वद्रूपं परमानन्दं तदा पश्यति निश्चितम् ॥ २८७ ॥
रात्रिपूजा-जपध्यानैर्बहुशो हेतुभावितैः ।
प्रसन्ना त्वं तदा देवि ततस्तत्र दृढा भवेत् ॥ २८८ ॥
सतीं दृष्ट्वा नमस्कुर्यात् स्पृष्ट्वा तां च शुचिर्भवेत् ।
पीत्वा च परमानन्दं लभते प्राणनिर्वृतिम् ॥ २८९ ॥
मोदिनीपूरितघटं बिल्वशाखादिशोभितम् ।
निधाय पुरतो मन्त्रैः पूजां कृत्वा विधानतः ॥ २९० ॥
धूपैर्दीपैश्च नैवेद्यैर्बलिभिश्चैव शुद्धिभिः ।
द्वाविंशतिशतं नित्यं जप्तव्यं वेदिकोपरि ॥ २९१ ॥
यथाशक्त्याथवा जप्यं लक्षमेकं सुसंयतम् ।
तस्मादुत्थाय विधिवत् तिलाज्यैः श्रीफलैर्हुनेत् ॥ २९२ ॥
तत्तया सुरया देवि तर्पयेच्च विधानतः ।
सन्तुष्टे मण्डले देवि संतुष्टा सिद्धिदा तदा ॥ २९३ ॥
निर्विघ्नं जायते तत्र निःशङ्कं निरुपद्रवम् ।
निःशोकं निर्विकारं च परं चेतः प्रसीदति ॥ २९४ ॥
नैवेद्यं तु नमस्कुर्यात् त्वद्बुद्ध्या स्वीकरिष्यति ।
भ्रमबुद्धिर्न कर्तव्या मनसापि कदाचन ॥ २९५ ॥

तन्नैवेद्यं चेतसापि यदि निन्दति कश्चन ।
तदा तं चर्वयेत् काली निर्मूलं जायतेऽथवा ॥ २९६ ॥
तस्माद् दृष्ट्वा च श्रुत्वा च नच निन्दायते क्वचित् ।
नरमार्जारमहिष-च्छागलैर्मेषकैस्तथा ॥ २९७ ॥
कपोतकलविङ्काद्यैर्हंसमद्गुर-कुक्कुटैः ।
शालसजालशकुल-रोहितादिभिरण्डजैः ॥ २९८ ॥
बलिभिर्विविधैश्चान्यैः फलैश्च मधुराप्लुतैः ।
सिक्तसंपक्कदग्धैश्च बिल्वचैरिक्षुयष्टिभिः ॥ २९९ ॥
नारिणीं पुरतः कृत्वा शुद्धचित्तेन देशिकः ।
स्त्रीणां मनो न हन्तव्यं स्त्रियश्चास्य विशेषतः ॥ ३०० ॥
शक्तिरूपा हि त्वद्रूप्य(क्तौऽक्तिः)यतः सर्वत्र शोभने ।
पशुशक्तिः पक्षिशक्तिर्नरशक्तिश्च शोभने ॥ ३०१ ॥
विगुणं पूजिता कर्म सगुणं जायते सदा ।
तासां पूजा विधानेन कर्तव्या भक्तितः शुभे । ३०२ ॥
कौलिनीं सुभगां शक्तिं पुष्पेणापि न ताडयेत् ।
यदि शक्तिर्भवेत् तुष्टा तुष्टां जानीहि तां शिवे ॥ ३०३ ॥
नित्यपूजाविधानेन जपहोमपरायणम् ।
कुलसङ्गं समाश्रित्य पुरश्चरणमाचरेत् ॥ ३०४ ॥
क्षेमङ्करीं जम्बुकीं च काकोलं गृध्रमुत्तमम् ।
दृष्ट्वा वैषां रुतं श्रुत्वा प्रणमेत् मन्त्रपूर्वकम् ॥ ३०५ ॥
जपकाले महेशानि यत्रैषां श्रूयते रवः ।
तदैव सिद्धिं जानीहि न जपेत् स्तोत्रमाचरेत् ॥ ३०६ ॥
बलिना मुण्डमालाभिर्गृहं कृत्वा जपं चरेत् ।
कृशोदरि महाचण्डे मुक्तकेशि बलिप्रिये ॥ ३०७ ॥

कुलाचारप्रसन्नास्ये नमस्ते शङ्करप्रिये ।
दीपैरुद्दीपितं कृत्वा तन्मध्ये निवसन् पुनः ॥ ३०८ ॥
परमानन्दचित्तेन तद्रूपस्य जपं चरेत् ।
एकलक्षेण जप्तेन साधयेत् सिद्धिमुत्तमाम् ॥ ३०९ ॥
रात्रौ जपं तथा पूजां रहस्यामृतसेवनम् ।
यदि न स्यात् कुलानन्दसाधकः कौलिकः कथम् ॥ ३१० ॥
बहुधा कथितं देवि सत्यं जानीहि मद्वचः ।
कुलामृतं विना देवि चेतः कस्मात् प्रसीदति ॥ ३११ ॥
ततो देवि समादाय पूजितां कुलपावनीम् ।
अनन्यभावमाश्रित्य ममात्मा सुप्रसीदति ॥ ३१२ ॥

श्रीदेव्युवाच ।

किमर्थं बहुधा देव मोदिनीस्तुतिरीरिता ।
तां विना नैव सिद्धिः स्यादित्येवं कथितं कथम् ॥ ३१३ ॥
तन्मे ब्रूहि महेशान येन तत्साधनं सदा ।
क्रियते शान्तचित्तेन तद्रूपं दृश्यते मुदा ॥ ३१४ ॥

श्रीभैरव उवाच ।

शृणु देवि परं गुह्यं कारणस्य च कारणम् ।
येन ज्ञातेन शारीरं मानसं च महेश्वरि ॥ ३१५ ॥
विनश्यति महा(देवि?मोहो)दिव्यं देहं च लप्स्यते ।
सर्वागमार्थसारं च सर्वयोगस्य मातरम् ॥ ३१६ ॥
शरीरं मलिनं विद्धि मनश्चञ्चलमेव च ।
मलापकर्षणं नास्ति कुतो ध्यानं महेश्वरि ॥ ३१७ ॥
शरीरभावा बहवः सुखदुःखात्मकाः शुभे ।
चेतःसंमीलनं केन ज्ञायतां तव जन्तुषु ॥ ३१८ ॥

भीतिलज्जाजुगुप्साद्या निद्रातन्द्राभ्रमादयः ।
अविपाको विभ्रमश्च शोकचिन्तादिकाः परे ॥ ३१९ ॥
भवन्ति विविधा भावा भूतानां देहधारिणाम् ।
देहव्यपाये नयनं भूतानां देहधारणे ॥ ३२० ॥
तत्रैव मन एवाहमात्मारामा सनातनी ।
अतस्तु तारिणीं देवि मम तेजःस्वरूपिणीम् ॥ ३२१ ॥
जानीहि भक्तिसंयुक्तां तामाश्रय विधानतः ।
मलापकर्षिते देहे सम्यग् दीपिततेजसि ॥ ३२२ ॥
ध्यानयोगे स्थिरत्वं च वलित्वं चोपलभ्यते ।
नाजीर्णो दुर्बलो रोगी भीरुश्चिन्तापरिप्लुतः ॥ ३२३ ॥
सुरासंसेवनाद् देवि नैते दोषा भवन्ति हि ।
अन्ये च बहवो दोषा नश्यन्ति मुक्तियोगतः ॥ ३२४ ॥
शापाश्चञ्चलचित्तानां ब्रह्मादीनामिहोदिताः ।
मन्त्रेण तां समुद्दिश्य मम पूजापरो भव ॥ ३२५ ॥
त्वत्स्वरूपां महादेवि तां विद्धि सर्वदा प्रिये ।
तया विना मनो नित्यं मालिन्यं न परित्यजेत् ॥ ३२६ ॥
परित्यक्ते तु मालिन्ये मनो देहं च रूपभाक् ।
अतः सुरां समाश्रित्य साधनं कुरु यत्नतः ॥ ३२७ ॥
इदानीं शृणु चार्वङ्गि शाक्ताचारं वरानने ।
येन विना न सिद्धिः स्यात् कल्पकोटिशतैरपि ॥ ३२८ ॥
मधु मांसं च मत्स्यं च मैथुनं महिला तथा ।
पञ्चमानां समाकृत्या पञ्चमी त्वत्स्वरूपिणी ॥ ३२९ ॥
नत्वा स्तुत्वा च तां देवीं पूजयित्वा सदा शुचिः ।
सुरा जनी च शक्तिः स्यान्मम रूपस्वरूपिणी ॥ ३३० ॥

तां समाश्रित्य सिद्धिः स्यान्नात्र कार्या विचारणा ।
सुराभाण्डं नमस्कुर्यात् स्त्रियं च रक्तवाससम् ॥ ३३१ ॥
कपिलां रोहिणीं गङ्गां गोष्ठं गां च पयस्विनीम् ।
कुलवृक्षफलैः पूजा नैवेद्यमामिषं रसम् ॥ ३३२ ॥
एका त्वं सर्वदेवानां सर्वदेवात्मिकापि च ।
सर्वानन्दमयः साक्षात् सर्वकामपरायणः ॥ ३३३ ॥
चतुष्पथजपासक्तः शुद्धः श्मशानिकः क्वचित् ।
भूत्वैव भावयन्नात्मानं ततः स्याच्छक्तिपूजकः ॥ ३३४ ॥
ब्रह्मानन्दो ब्रह्मरसः सुमनोऽस्थिविभूषितम् ।
सुरासनं प्रेतमाला धार्यते शक्तिदेवतैः ॥ ३३५ ॥
आत्मभूकुसुमैः शुक्रैर्बलिभिः पूजनं निशि ।
परब्रह्मरसानन्दी करोति शक्तिसेवकः ॥ ३३६ ॥
रात्रिपूजा विशेषेण कर्तव्या साधकोत्तमैः ।
बलिभिः पञ्चमीवर्गैरन्नैर्विविधपिष्टकैः ॥ ३३७ ॥
अशनैस्तुलितैः क्लिन्नै रसकेन च सारितैः ।
पुष्पैर्धूपैश्च दीपैश्च नैवेद्यैर्बलिभिस्तथा ॥ ३३८ ॥
सानन्दैर्नृत्यगीताद्यैः शक्तिभिः साधकैः सह ।
संपूज्य पर(मा?या)भक्त्या तर्पयेद्वर्गमाश्रितः ॥ ३३९ ॥
कुलीनान् कुलसंबन्धान् विज्ञातान् द्वैतमानसान् ।
महासत्त्वान् दृष्टपथान् मदैकभाविनोऽपि च ॥ ३४० ॥
शक्तयः सर्वतः पूज्या मद्भावेन विशेषतः ।
शक्तिश्च कुसुमैः पूज्या सिन्दूरैर्गन्धचन्दनैः ॥ ३४१ ॥
अथ माल्यैरलङ्कारैः केवलं मातृभावतः ।
कुमारीपूजनं नित्यं शक्तिं वान्यां प्रपूजयेत् ॥ ३४२ ॥

एवं शक्तो यदा शक्तैः पूजनं भवमोचनम् ।
परीवादः पराभूतिर्हठादाकर्षणं स्त्रियाः ॥ ३४३ ॥
मनसापि न कर्तव्यं देवि सिद्धिं यदीच्छ(सि?ति) ।
रात्रौ च भ्रमणं देवि रात्रौ च शक्तिपूजनम् ॥ ३४४ ॥
न करोति यदा लोके साधकः कौलिकः कथम् ।
अनिन्दा सर्वभूतानां सर्वत्रैव दयान्वितः ॥ ३४५ ॥
बलिं विना महादेव्या हिंसा सर्वत्र वर्जिता ।
सदा सानन्दमनसा मम कामपरायणः ॥ ३४६ ॥
चतुष्पथनमस्कारी श्मशानचारिपूजकः ।
अन्धकारसमास्थायी गुहासेवनतत्परः ॥ ३४७ ॥
परमामृतपूतात्मा मम प्रीतिपरायणः ।
शालिग्रामे ब्राह्मणे च निन्दां चैव विवर्जयेत् ॥ ३४८ ॥
एषां पूजां विशेषेण करोति कारयत्यपि ।
ब्राह्मणो ब्रह्मभावेन क्षत्रः क्षात्रेण शङ्करि ॥ ३४९ ॥
वैश्यश्च(शूद्र?वैश्य)भावेन प्रसन्नो विचरिष्यति ।
दिवा हविष्यभोजी स्यात् न स्पृशेदन्यपूरुषम् ॥ ३५० ॥
रात्रौ स्वीयगणैर्युक्तः पञ्चमीमाश्रयेच्छिवे ।
तत्र पूजापरो भूत्वा शक्तिभिः साधकैः सह ॥ ३५१ ॥
नृत्यते गीयते यद्यत् तत् स्तोत्रं पूजनं तव ।
विना तीर्थाभिषेकेण नान्तः शुद्ध्यति भैरवि ॥ ३५२ ॥
न भूयो याति शोकांश्च परत्र मोक्षभाग् भवेत् ।
न रूपदर्शने देवि संशयो नास्ति कश्चन ॥ ३५३ ॥
इति पूजां महेशानि कृत्वा देवीपुरं वसेत् ।
अस्याः परतरा देवि नास्ति तन्त्रे महेश्वरि ॥ ३५४ ॥

एषा पूजा हि देव्याश्च पूजैव सुरवन्दिते ।
सर्वधर्मान् परित्यज्य पूजामेतां करोति यः ॥ ३५५ ॥
स योगी च महात्मा च संसारात् त्रायते क्षणात् ।
अगम्यागमने पापं नास्ति तस्य वरानने ॥ ३५६ ॥
या कथा तव देवेशि तव स्तोत्रं वरानने ।
इतस्ततो यद्गमनं प्रदक्षिणमुदाहृतम् ॥ ३५७ ॥
ततः परं महादेवि धर्माधर्मौ न जायते ।
अप्रकाश्यं महेशानि तव स्नेहात् प्रकाशितम् ॥ ३५८ ॥
भक्तकेभ्यो महेशानि प्रकाशमुपदाय च ।
अभक्तेभ्यो न दद्याद्धि दत्त्वा मृत्युमवाप्नुयात् ॥ ३५९ ॥
इति ते कथितं देव्यास्तर्पणं शृणु भैरवि ।
विद्याकामेन होतव्यं तिलाज्यं मधुसंयुतम् ॥ ३६० ॥
बिल्वपत्रं घृताक्तं च किंशुकं बकुलं तथा ।
बन्धूकपुष्पहोमेन राजा च दासतामियात् ॥ ३६१ ॥
सर्पिर्लवणहोमेन आकर्षयति कामिनीम् ।
कर्णिकारस्य होमेन सौभाग्यं लभते नरः ॥ ३६२ ॥
करवीरैश्च पुंनागैः पुष्टिमाप्नोत्यसंशयम् ।
राजवृक्षस्य होमेन सर्वसंपत्तिमान् भवेत् ॥ ३६३ ॥
दूर्वातिलाज्यहोमेन दीर्घायुष्ट्वमवाप्नुयात् ।
संपूज्य मूलमन्त्रेण विल्वपत्रैर्घृतान्वितैः ॥ ३६४ ॥
सहस्रं प्रत्यहं हुत्वा प्राप्नोति परमां गतिम् ।
घृताक्तमालतीपुष्पहोमाद् द्रुतकविर्भवेत् ॥ ३६५ ॥
तर्पणस्य प्रसङ्गेन होमोऽयं कथितः शिवे ।
मधुना तर्पणं कुर्यात् सर्वकामफलप्रदम् ॥ ३६६ ॥

मन्त्रसिद्ध्यै महेशानि महापातकनाशनम् ।
कर्पूरमिश्रितैस्तोयैर्मासमात्रं प्रतर्पयेत् ॥ ३६७ ॥
वशीकृत्य नृपान् सर्वान् भोगी स्याद् यावदायुषम् ।
घृतैः पूर्णयशः सिध्येद् दुग्धैरारोग्यमाप्नुयात् ॥ ३६८ ॥
अगुरुमिश्रितं देवि सर्वकालं सुखी भवेत् ।
नारिकेलोदकमिश्रैस्तोयैः सर्वार्थमाप्नुयात् ॥ ३६९ ॥
मरीचमिश्रितैस्तोयैः सर्वाञ्छत्रून् विनाशयेत् ।
केवलैरुष्णतोयैश्च शत्रुमुच्चाटयेत् क्षणात् ॥ ३७० ॥
ज्वराविष्टो भवेत् तेन दुग्धसेकात् शमं भवेत् ।
हविष्याशी मुक्तकेशो जपेदयुतमाचरेत् ॥ ३७१ ॥
गद्यपद्यमयी वाणी सभायां तस्य जायते ।
उच्चाटयति पिङ्गाक्षी संभावयति केकरा ॥ ३७२ ॥
विद्रावयति मुक्तास्या संभ्रामयति घूर्णिता ।
विक्षोभयति संक्षुब्धा संतापयति सन्निभा ॥ ३७३ ॥
संकोचयति संरुद्धा विप्ररुद्धा प्रबोधयेत् ।
एतत् सर्वं प्रकर्तव्यं भावनामात्रचिन्तनम् ॥ ३७४ ॥
उच्चाटेषु च सर्वेषु चायुतं प्रजपेत् सुधीः ।
शताभिजप्तमात्रेण रोचनातिलकं नरः ॥ ३७५ ॥
कृत्वा पश्यति यं मन्त्री तं कुर्याद् दासवत् प्रिये ।
दन्तेनानीयते चूर्णं कीलकं तेन कारयेत् ॥ ३७६ ॥
यथा मधुघृताक्तेन पद्मिनीपत्रमात्रके ।
लिखेत् सूत्रावलीमध्ये मूलमन्त्रं विदर्भितम् ॥ ३७७ ॥
तत् कुण्डचतुरस्रे च निक्षिप्य जुहुयादपि ।
सहस्रं क्षीरनीराक्तं पद्मानां लोहितत्विषाम् ॥ ३७८ ॥

मन्त्रं शृणु वरारोहे येन सिद्ध्यति निश्चितम् ।
ओं पद्मे पद्मे महापद्मे पद्मावति माये तथा ॥ ३७९ ॥
स्वाहान्तोऽयं महामन्त्रो नैमित्तिकफलप्रदः ।
एवं यः कुरुते कर्म सद्यो द्रुतकविर्भवेत् ॥ ३८० ॥
उपचारविशेषेण राजपत्नीं वशं नयेत् ।
रम्भाजातीवीजपूरं सुगन्धिपरिमिश्रितम् ॥ ३८१ ॥
मिश्रीकृत्य वलिं दद्यादष्टम्यां च विशेषतः ।
प्रयोगवलिमन्त्रोऽयं प्रयोगान् साधयेद् यदि ॥ ३८२ ॥
अर्धरात्रे ततो नित्यं वलिं दद्यात् चतुष्पथे ।
परसैन्यग्रहारिष्ट-रोगकृत्यानिवारणम् ॥ ३८३ ।
प्रणवं पूर्वमुच्चार्य उग्रतारे ततः परम् ।
विकटदंष्ट्रे परपक्षं मोहय[१]-द्वन्द्वमुच्चरेत् ॥ ३८४ ॥
खादय-द्वन्द्वमुच्चार्य पचद्वन्द्वं वदेत् पुनः ।
"ये मां हिंसितुमुद्यता योगिनीचक्रैस्तान् हारय हूं फट् स्वाहा ।
परविद्यामाकर्षय२ छेदय२ हन२ कपाले गृह्ण२ स्वाहा ।"
अनेनैव च देवेशि वलिं दद्यान्महेश्वरि ।
मायावीजं समुच्चार्य कालि कालीति सुन्दरि ॥ ३८५ ॥
वज्रेश्वरी-पदं पश्चाल्लोहदण्डायै नमः-पदम् ।
इति संपूज्य देवेशि शक्तिं संपूजयेत् ततः ॥ ३८६ ॥
हूँ वागीश्वरीब्रह्मभ्यां नमः । हूँ लक्ष्मीनारायणाभ्यां च ।
ततो नमः-पदं ब्रूयाद् देवि चण्डे महेश्वरि ॥ ३८७ ॥
ततोमामहेश्वराभ्यां नम इत्यादिनार्चयेत् ।
प्रणवं च ततः पश्चात् कार्तिकेश्वराभ्यां नमः ॥ ३८८ ॥

१ 'क्षोभय' ख. पाठः ।

इत्यने(न?नैव)मन्त्रेण शक्तिं संपूजयेन्नरः ।
इति खड्गं प्रपूज्यैव विशेषेण प्रपूजयेत् ॥ ३८९ ॥
ॐ खड्गाय खरनाशाय शक्तिकार्यार्थतत्पर ।
पशुच्छेदस्त्वया कार्यः खड्गनाथ नमोऽस्तु ते ॥ ३९० ॥
अनेनैव तु मन्त्रेण प्रणमेत् खड्गमुत्तमम् ।
गृहीत्वा ताम्रपात्रं च जलपूर्णमुदङ्मुखः ॥ ३९१ ॥
हर्षकामो महादेव्यै पशोश्च प्रोक्षणं चरेत् ।
प्रोक्षणं च पशोः कृत्वा चोत्सृजेद् देवताधिया ॥ ३९२ ॥
यथोक्तेन विधानेन तुभ्यमस्तु निवेदनम् ।
छिन्ने च पतिते वृद्धिर्वामभागे च निन्दितम् ॥ ३९३ ॥
दैन्यं मध्ये च पतितं देवि छेदं स्मरेद् बुधः ।
ततः कुण्डान्तिके गत्वा आहुतिर्दशपञ्चभिः ॥ ३९४ ॥
तेनैवमुत्सृजन् दोषं बलिं लक्षेत् सलक्षणम् ।
ततो रुधिरमाधाय वटुकादीन् समर्चयेत् ॥ ३९५ ॥
नैर्ऋत्यां च महेशानि हूँ वाँ वटुकभैरवम् ।
वायव्ये हूं यां योगिनीभ्यो नमः इत्यादिनार्चयेत् ॥३९६॥
ऐशान्यां च महेशानि हूं क्षौँ क्षेत्रपालाय नमः ।
इत्यादिना देवि(सम्यक्)गन्धपुष्पैः समर्चयेत् ॥ ३९७ ॥
आग्नेय्यां हूँ गां गणेशाय नम इत्यादिनार्चयेत् ।
गन्धपुष्पैः समभ्यर्च्य बलिदानं समाचरेत् ।
इति ते कथितो देवि बलिदानस्य निर्णयः ॥ ३९८ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (कुलपूजा-शाक्ताचारादिविधिनिरूपणं) षष्ठः पटलः ॥ ६ ॥

अथ

## सप्तमः पटलः ।



श्रीभैरव उवाच ।

अथ वक्ष्ये महेशानि निग्रहोपायमुत्तमम् ।
अवश्यमेव कर्तव्यं प्रयोगसाधनं तथा ॥ १ ॥
मङ्गले शनिवारे च श्मशानाङ्गारमानयेत् ।
कृष्णवस्त्रेण संवेष्ट्य बध्नीयाद्रक्ततन्तुना ॥ २ ॥
शताभिमन्त्रितं कृत्वा निःक्षिपेद् वैरिवेश्मनि ।
सप्ताहाभ्यन्तरे तेषामुच्चाटनमिदं भवेत् ॥ ३ ॥
नरास्थि विलिखेन्मन्त्रं क्षारयुक्तहरिद्रया ।
सहस्रं परिजप्याथ निशायां शनिवासरे ॥ ४ ॥
निक्षिप्यते यस्य गेहे तस्य मृत्युस्त्रिमासतः ।
क्षेत्रे तु शस्यहानिः स्याज्जवहानिस्तुरङ्गमे ॥ ५ ॥
धनहानिर्धनागारे ग्राममध्ये तु तत्क्षयम् ।
(द्वि?द्वे)षे तु विलिखेद् मन्त्रं प्रेतकर्पटके सुधीः ॥ ६ ॥
द्वेष्यद्वेषकयोर्नाम्ना तस्य द्वेषो महान् भवेत् ।
मन्त्रं शृणु वरारोहे प्रयोगार्हो भवेद् यतः ॥ ७ ॥
अमुकं मारयेत्यादौ मारयेति पदं ततः ।
सहस्रं परिसंजप्य मन्त्रमेनं महेश्वरि ॥ ८ ॥
द्वेषमन्त्रविशेषं तु शृणु चैकमनाः प्रिये ।
अमुकामुकयोर्द्वेषं कुरु कुर्वित्यनन्तरम् ॥ ९ ॥
मन्त्रमुच्चार्य देवेशि जपेद् देवि सहस्रकम् ।
उच्चाटय-पदद्वन्द्वं पिङ्गाक्षि तदनन्तरम् ॥ १० ॥

फट्-मन्त्रं मन्त्रमुच्चार्य साध्यसंज्ञान्वितं पुनः ।
देशाद् देशान्तरं याति रिपुः काक इवापरः ॥ ११ ॥
वह्निपुटे रिपोर्मन्त्रं लिखित्वा पत्रकेण तु ।
श्मशाने मन्त्रमुच्चार्य पुटीकृत्य विदर्भ्य च ॥ १२ ॥
सहस्रजन्मभिर्जप्ता विद्या न हि फलप्रदा ।
सिद्धयश्च विनश्यन्ति देवानामपि दुर्लभाः ॥ १३ ॥
मातृचक्रेऽमृतं लेख्यं भिन्नाञ्जनपुटीकृतम् ।
जले निःक्षिप्य मन्त्रं तु पुनर्नव इतीरितः ॥ १४ ॥
जन्मलुप्तो मन्त्रः स्निग्धो नवोदितशशी यथा ।
क्षणे क्षणेऽपि तेजस्वी रिपुदृष्टिगतोऽपि च ॥ १५ ॥
अथ वक्ष्ये मन्त्रमेकं धारयेत् सर्वदा प्रिये ।
योनियुग्मे लिखेन्मन्त्रं मूलं हेमशलाकया ॥ १६ ॥
क्लीवहीनान् दीर्घभिन्नान् [1]पद्मकोणे च लिखेत्ततः ।
अष्टपत्रेष्वष्टवर्णास्तद्बहिर्भूपुरद्वयम् ॥ १७ ॥
अष्टवज्रं भूपुरे च विलिखेत् साधकोत्तमः ।
स्वर्णपत्रेऽथवा भूर्जे रौप्ये वाप्यथ सुव्रते ॥ १८ ॥
विलिखेद् हेमलेखन्या गन्धाष्टकसमन्वितम् ।
दूर्वाकाण्डेन संलिख्य कुशमूलेन वा पुनः ॥ १९ ॥
वेष्टितं पीतवस्त्रेण यत्नेन परिवेष्टयेत् ।
बध्नीयात् पीतवस्त्रेण शिशूनां कण्ठभूषणम् ॥ २० ॥
स्त्रीणां वामभुजे चैवमन्येषां दक्षिणे भुजे ।
वन्ध्या तु लभते पुत्रं निर्धनो धनवान् भवेत् ॥ २१ ॥
इयं रक्षा पुरा बद्धा ज्ञानार्थं गौतमादिभिः ।
कीर्त्यर्थं पार्थिवैश्चान्यैः संग्रामे जयकाङ्क्षिभिः ॥ २२ ॥

---

[1] 'षट्कोणे' इति पाठान्तरम् ।

वाग्भवं कुलदेवी च तारकं वाग्भवं तथा ।
हल्लेखास्त्रमनुश्चैव वह्निजायावधिर्मनुः ॥ २३ ॥
अष्टाक्षरो मनुः प्रोक्तो मन्त्राणां सार ईरितः ।
कालिकामन्त्रतन्त्रोक्तान् प्रयोगानत्र चाचरेत् ॥ २४ ॥
कालिकातन्त्रमन्त्रोक्तान् प्रयोगानिह चाचरेत् ।
यथा काली तथा नीला भेदो नास्ति महेश्वरि ॥ २५ ॥
अविशेषेण कर्तव्यं सत्यं च कथितं मया ।
अन्यच्छृणु वरारोहे वशीकरणमुत्तमम् ॥ २६ ॥
यत्कृते साधको वीरो धन्यो भवति निश्चितम् ।
पुष्यार्के च महादेवि वीरमूलं समानयेत् ॥ २७ ॥
शोधितं पञ्चगव्येन शोषयेद् भास्करद्युतौ ।
चूर्णयेद् मेषशृङ्गेण समादाय च तं शिवे ॥ २८ ॥
यन्त्रं संलिख्य देवेशि मातृकाख्यं सुशोभनम् ।
मन्त्रं शृणु वरारोहे ध्यानात् सार्वज्ञ्यदायकम् ॥ २९ ॥
व्योमेन्द्वौरसनार्णकर्णिकमचां द्वन्द्वैः स्फुरत्केसरं
वर्णोल्लासिवसुच्छदं वसुमतीगेहेन संवेष्टितम् ।
आशास्वस्त्रिषु लान्तटान्तसहितं क्षोणीपुरेणावृतं
यन्त्रं नीलतनोः परं निगदितं सर्वार्थसिद्धिप्रदम् ॥ ३० ॥
तेन चूर्णेन देवेशि यन्त्रं संलिख्य यत्नतः ।
मृत्पात्रे च समालिख्य स्थापयेत् कुम्भकोपरि ॥ ३१ ॥
तिलपूर्णं घटं तेन स्थापयेत् सुरवन्दिते ।
पट्टवस्त्रेण चामुण्डां पूजयेच्छार्करोदकैः ॥ ३२ ॥
तन्मन्त्रं परमेशानि जप्त्वा वशयेज्जगत्त्रयम् ।
कपर्दिनं समुद्धृत्य कलहं तद्द्वितीयकम् ॥ ३३ ॥

खड्गेति परमेशानि चामुण्डे च ततः परम् ।
जयशब्दं समुच्चार्य वशमानय ठद्वयम् ॥ ३४ ॥
अनेन मन्त्रराजेन कुर्यात् पौष्टिकमुत्तमम् ।
भक्ष्यं भोज्यं महादेव्यै दद्यात् सुरगणार्चिते ॥ ३५ ॥
रक्तासने चोपविश्य सहस्राष्टौ जपेन्मुदा ।
दशांशादिप्रमाणेन होमादींश्च समाचरेत् ॥ ३६ ॥
जापे समाप्ते देवेशि दद्याद् रजतदक्षिणाम् ।
पलं वापि तदर्धं वा तदर्धं वापि शक्तितः ॥ ३७ ॥
प्रवालमालया देवि जपं कुर्याच्छुचिस्मिते ।
उष्णीषं लोहितं प्रोक्तमुत्तरीयं तथा प्रिये ॥ ३८ ॥
रक्तवस्त्रं परीधाय जपेत् तद्गतमानसः ।
कवित्वं जायते सुभ्रु! मन्त्रस्यास्य प्रसादतः ॥ ३९ ॥
कविता वशमायाति नात्र कार्या विचारणा ।
इदानीं शृणु चार्वङ्गि कविताकारकं परम् ॥ ४० ॥
प्रयोगं सर्वसंगोप्यं तव स्नेहात् प्रकाश्यते ।
नटीं चण्डा(लीनं?लिनीं)चैव योगिनं सर्वमोहनम् ॥ ४१ ॥
वीजत्रयं जपेद्रात्रौ मध्यरात्रौ रवेर्दिने ।
अष्टाधिकसहस्रेण प्रमाणेन जपं चरेत् ॥ ४२ ॥
शताभिमन्त्रितं कृत्वा पिवेच्च जलमुत्तमम् ।
सप्तदिनप्रयोगेण कविता चित्तमोदिनी ॥ ४३ ॥
जायते नात्र सन्देहः सत्यं सुरगणार्चिते ।
पाणिना दक्षिणेनैव मधुलाजान् समानयेत् ॥ ४४ ॥
प्रागेव नाडीच्छेदाद् वालं संस्कुर्याच्च साधकः ।
कवित्वं जायते तेनाद्वितीयं सुरवन्दिते ॥ ४५ ॥

जिह्वां संमार्ज्य देवेशि लिखेद् हेमशलाकया ।
दूर्वया वा महादेवि जिह्वोष्ठयोः समालिखेत् ॥ ४६ ॥
पङ्क्तिद्वयेन संलिख्य कुर्याच्च बालसंस्क्रियाम् ।
एकादशाहे देवेशि द्वादशाहेऽथ वा पुनः ॥ ४७ ॥
वर्णजात्यादिभेदेन मासान्तं संभविष्यति ।
यथाशक्त्युपचारेण देवतां पूजयेत् पुरः ॥ ४८ ॥
संपूज्य देवतां भक्त्या लिखेन्मन्त्रं महेश्वरि ।
यदा पिता न देशस्थः पितृव्यो मातुलोऽपि वा ॥ ४९ ॥
लिखित्वा परमेशानि कुर्याच्च बालसंस्क्रियाम् ।
मूलमन्त्रं लिखेद् मन्त्री यस्योष्ठे श्वेतदूर्वया ॥ ५० ॥
वाक्योच्चाररतो बालो वाग्मी द्रुतकविर्भवेत् ।
जन्मसंस्कारकं नाम पुत्रे जाते प्रशस्यते ॥ ५१ ॥
जिह्वायां तु लिखेद् मन्त्रं यज्ञदारु-कुशेन वा ।
वारत्रयं सुसंमार्ज्य दक्षिणेनैव पाणिना ॥ ५२ ॥
मन्त्रमुच्चार्य प्रत्येकं पङ्क्तिं कुर्यात् सुशोभनाम् ।
आदौ संस्कारः कर्तव्यस्तदन्ते च लिखेन्मनुम् ॥ ५३ ॥
गन्धचन्दनपुष्पैश्च पूजयेत् तारिणीं शिवाम् ।
उत्तराभिमुखो भूत्वा स्थापयेत् पीठमुत्तमम् ॥ ५४ ॥
पूजयेत् तारिणीं देवीं नानाभक्ष्यैः सुशोभनैः ।
षोडशैरुपचारैश्च पूजयेद् भक्तिभावतः ॥ ५५ ॥
धूपं दद्याद् गुग्गुलुना सर्वकर्मफलप्रदम् ।
नारिकेलं तथा रम्भां बदरं बकुलं तथा ॥ ५६ ॥
बीजपूरं कर्णिकारं शर्करां गन्धसंयुताम् ।
मधूदकं कलायं च सिद्धान्नं पायसप्लुतम् ॥ ५७ ॥

मांसं मत्स्यं पिष्टकं च दद्यादतिप्रियं महत् ।
कविर्वाग्मी भवेत् पुत्रः सर्वकर्मप्रकारकः ॥ ५८ ॥
जितेन्द्रियः सत्यवादी धार्मिको जायते महान् ।
पिता चैव पितुर्भ्राता मातुर्भ्राता पुनस्तथा ॥ ५९ ॥
लिखेद् मन्त्रं महेशानि नान्यः सुरगणार्चिते ।
भ्राता वापि लिखेद् मन्त्रं सर्वकामफलप्रदम् ॥ ६० ॥
मातुः क्रोडे समादाय वस्त्रेणास्तीर्य यन्ततः ।
शान्तिं कुर्याद् बालकस्य ब्राह्मणैः[1] सह संयुतः ॥ ६१ ॥
इमं पुत्रं कामयत कामजानामिहैव तु ।
देवेभ्यश्च महेशानि पुष्णाति पदमन्तरम् ॥ ६२ ॥
"शिवशान्तिस्ताराये केसरेभ्यस्ताराये शिवाय शिवयशसे"
मन्त्रस्य लेखनान्ते तु शान्तिं कुर्याद् महेश्वरि ।
इत्येतद् मत्स्यसूक्ते च कथितं विस्तरेण तु ॥ ६३ ॥
तन्मातुर्वामकर्णे तु शान्तिस्तोत्रं पठेन्मुदा ।
मातर्देवि नमस्तेऽस्तु ब्रह्मरूपधरेऽनघे ॥
कृपया हर विघ्नं मे सर्वसिद्धिं[2] प्रयच्छ मे ॥ ६४ ॥
माहेशि वरदे देवि परमानन्दरूपिणि ।
कृपया हर मे विघ्नं सर्वसिद्धिं प्रयच्छ मे ॥ ६५ ॥
कौमारि सर्वविद्येशे कौमारक्रीडने परे ।
कृपया हर मे विघ्नं सर्वसिद्धिं प्रयच्छ मे ॥ ६६ ॥
विष्णुरूपधरे देवि विनतासुतवाहिनि ।
कृपया हर विघ्नं मे मन्त्रसिद्धिं प्रयच्छ मे ॥ ६७ ॥
वाराहि वरदे देवि दंष्ट्रोद्धृतवसुन्धरे ।
कृपया हर मे विघ्नं सर्वसिद्धिं प्रयच्छ मे ॥ ६८ ॥

१ 'साधकैः' ख. पाठः । २ 'मन्त्र' ख पाठः ।

शक्ररूपधरे देवि शक्रादिसुरपूजिते ।
कृपया हर मे विघ्नं सर्वसिद्धिं प्रयच्छ मे ॥ ६९ ॥
चामुण्डे मुण्डमालासृक्चर्चिते विघ्ननाशिनि ।
कृपया हर मे विघ्नं सर्वसिद्धिं प्रयच्छ मे ॥ ७० ॥
महालक्ष्मि महोत्साहे शोकसंतापहारिणि ।
कृपया हर मे विघ्नं सर्वसिद्धिं प्रयच्छ मे ॥ ७१ ॥
मितिमात्रमये देवि मितिमात्रबहिष्कृते ।
एके बहुतरे[1] देवि विश्वरूपे नमोऽस्तु ते ॥ ७२ ॥
इदं स्तोत्रं पठेद् यस्तु कर्मारम्भे महेश्वरि ।
विदग्धां वा समालोक्य तस्य विघ्नो न जायते ॥ ७३ ॥
कुलीनस्य द्वारदेवाः कथितास्तव सुन्दरि ।
दीक्षाकाले नित्यपूजासमये नार्चयेद् यदि ॥ ७४ ॥
तस्य पूजाफलं देवि नीयते यक्षराक्षसैः ।
शतवर्षजपाद् देवि न सिद्धिर्जायते प्रिये ॥ ७५ ॥
महापदि समुत्पाते पठेत् स्तोत्रं गणेश्वरि ।
आपदश्च पलायन्ते संशयो नास्ति कश्चन ॥ ७६ ॥
विद्याकामेन देवेशि शतकृत्वः पठेत् स्तवम् ।
इति ते कथितं मातुः स्तोत्रं कण्ठविभूषणम् ॥ ७७ ॥
मद्भक्तेभ्यो महेशानि प्रकाशमुपपादय ।
अप्रकाश्यमिदं स्तोत्रं न देयं यस्य कस्यचित् ॥ ७८ ॥
दातव्यं हि सदा तस्मै भक्तिश्रद्धान्वितोऽपि यः ।
सत्कुलीनाय शान्ताय ऋजवे दम्भवर्जिने ॥ ७९ ॥
दद्यात् स्तोत्रं महेशानि नान्यथा फलभाग्भवेत् ।
अष्टादशपुराणेषु वेदव्यासेन कीर्तितम् ॥ ८० ॥

---

[1] 'विधे' ख. पाठः ।

श्रीदेव्युवाच ।

देवदेव महादेव स्थितिसंहारकारक ।
प्रश्नमेकं करोम्यत्र सकाशात् तव सुव्रत ॥ ८१ ॥
कैतवं च परित्यज्य तत् कथ्यं भवनाशन ।
महाचीनक्रमं देव कथितं न प्रकाशितम् ।
कथयस्व तदिदानीं यदि स्नेहोऽस्ति मां प्रति ॥ ८२ ॥

श्रीभैरव उवाच ।

महाचीनक्रमं देवि सर्व्वतन्त्रेषु गोपितम् ।
यत् कृत्वा साधकाः सर्वे शिवत्वं यान्ति तत्क्षणात् ॥ ८३ ॥
न वक्तव्यं महेशानि भुवनत्रितये शिवे ।
शुद्धभावेन देवेशि वक्तव्यं तव गोचरे ॥ ८४ ॥
नान्योऽस्ति मे प्रियः कोऽपि त्वदन्यः सुरवन्दिते ।
इदानीं परमेशानि निधारय मनः शिवे ॥ ८५ ॥
महाचीनक्रमं देवि कथितव्यं वरानने ।
अहं देहो महेशानि देही त्वं सर्व्वरूपदृक् ॥ ८६ ॥
मीनो यथा महादेवि पयसि प्रहृतो यथा ।
सदात्मा त्वं महेशानि अकथ्यं नास्ति सुन्दरि ॥ ८७ ॥
केचिद् देवा नरा केचिद् दानवा यक्षराक्षसाः ।
नागलोकाः किन्नराश्च गन्धर्व्वाप्सरसां गणाः ॥ ८८ ॥
ये वा पशुमृगाः पक्षा ये केचिज्जगतीगताः ।
एते जडतराः सर्वे परस्परखलात्मकाः ॥ ८९ ॥
कुकर्मनिरताः सर्वे कुमार्गदर्शनोत्सुकाः ।
एतेषां ब्रह्म विज्ञानमानन्दं ब्रह्म चित्सुखम् ॥ ९० ॥
न जानाति महेशानि तत् कथं कथयामि ते ।
नित्यमुक्तस्वभावोऽयं तदर्थमिदमीरितम् ॥ ९१ ॥

१ 'कोऽपि' ख. पाठः ।

त्वमस्व यदि चार्वङ्गि न वक्तव्यं महेश्वरि ।

[श्रीदेव्युवाच ।]

नमस्ते शिवरूपाय नमस्ते गुरुरूपिणे ॥ ९२ ॥
नमस्ते वरद स्वामिन् करुणानिधये नमः ।
अन्यदेवरता ये च सर्वे त्वत्पदकाङ्क्षिणः ॥ ९३ ॥
तेषामेवाधिकफलं मद्भक्तानां व्यवस्थितम् ।
सिंहव्याघ्रादयो ये च ये च विघ्नानुसारिणः[1] ॥ ९४ ॥
विकाराश्च तथा सर्पास्तथान्ये दुष्टजन्तवः ।
ते सर्वे विलयं यान्ति पतङ्गा इव पावके ॥ ९५ ॥
देहं[2] दीपशिखाकारं दृश्यते दुष्टजन्तुभिः ।
केवलं प्रेमभावेन त्वयैव विभुणा प्रभो ॥ ९६ ॥
किं वा शवमयो भूत्वा आसने पञ्चदेवताः ।
पृथिवी जलतां याति जलं तेजोमयं भवेत् ॥ ९७ ॥
तेजो वायुं तथा वायुराकाशं तत्प्रकाशकम् ।
दानवा राक्षसाः सर्वे ये चान्ये [दानवा?देवता]गणाः ॥९८॥
राजानश्च तथा चान्ये सर्वे त्वत्पादवर्तिनः ।
आज्ञां भजन्ति गन्धर्वाः किं पुनर्नरकीटकाः[3] ॥ ९९ ॥
यत्र यत्र भवेद् वाञ्छा तत्तत्सिद्धिः करे स्थिता ।
सदानुगामिनी वाणी भजते तं सुनिश्चितम् ॥ १०० ॥
द्विधाभावं परित्यज्य किमन्यद्बहुभाषितैः ।
मोक्षार्थी लभते मोक्षं धनार्थी धनमाप्नुयात् ॥ १०१ ॥
अन्ते तु जायते गौरीलोके शिव इवापरः ।
सिद्धा भवन्ति यद्भक्ताः कथयस्व ममाग्रतः ॥ १०२ ॥

---

१ 'कारिणः' ख. पाठः । २ 'गेहे' ख. पाठः । ३ 'किन्नराः' ख. पाठः ।

[श्रीभैरव उवाच ।]

न वक्तव्यमभक्ताय परभक्ताय पापिने ।
महाचीनक्रमं देवि विविधं कथितं शिवे ॥ १०३ ॥
स्नानादि मानसं शौचं मानसः प्रवरो जपः ।
पूजनं मानसं दिव्यं मानसं कल्पनादिकम् ॥ १०४ ॥
सर्व एव शुभः कालो नाशुभो वर्तते क्वचित् ।
न विशेषो दिवा रात्रौ न सन्ध्यायां महानिशि ॥ १०५ ॥
वस्त्रासनस्थानगे[ हे?ह ]देहस्पर्शादि वारिणः ।
शुद्धिं नचाचरेदत्र निर्विकल्पं मनश्चरेत् ॥ १०६ ॥
नात्र शुद्ध्याद्यपेक्षास्ति न चामेध्यादिदूषणम् ।
य एवं चिन्तयेद् मन्त्री सर्वकामफलप्रदम् ॥ १०७ ॥
गद्यपद्यमयी वाणी सभायां तस्य जायते ।
तस्य दर्शनमात्रेण वादिनो निष्प्रभा मताः ॥ १०८ ॥
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ।
सर्वदा पूजयेद् देवीमस्नातः कृतभोजनः ॥ १०९ ॥
महानिश्यशुचौ देशे वलिं मन्त्रेण दापयेत् ।
स्त्रीनिन्दां च न कुर्वीत तासां प्रेम विवर्द्धयेत् ॥ ११० ॥
अत्युत्कटापराधेऽपि न तस्या द्वेषमाचरेत् ।
स्त्रीद्वेषो नैव कर्तव्यो विशेषात् पूजयेत् स्त्रियः ॥ १११ ॥
जपस्थाने महाशङ्खं निवेश्योर्ध्वं जपं चरेत् ।
स्त्रियं गच्छन् स्पृशन् पश्यन् यत्र कुत्रापि देशिकः ॥ ११२ ॥
भक्षंस्ताम्बूलमन्यांश्च भ[ क्ष?क्ष्य ]द्रव्यं यथारुचि ।
मांसमत्स्यदधिक्षौद्रभ[ क्ष?क्ष्य ]द्रव्यं यथारुचि ॥ ११३ ॥
भुक्तान्नशेषभ[ क्षा?क्ष्या ]णि भुक्त्वा सर्वं जपं चरेत् ।
दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ॥ ११४ ॥

न जपे कालनियमो नार्चादिषु बलिष्वपि ।
स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ॥ ११५ ॥
नाधर्मो विद्यते सुभ्रु किञ्चिद् धर्मो महान् भवेत् ।
स्वेच्छाचारस्थितो देवि प्रचरेद् हृष्टमानसः ॥ ११६ ॥
(कृतार्थीकार्तार्थ्य)मन्यमानस्तु संतुष्टो जितमानसः ।
जपं कृत्वा विशेषेण स्त्रिया च जपमाचरेत् ॥ ११७ ॥
आसनं शृणु देवेशि प्राक् सिद्ध्यैज्जपमुत्तमम् ।
पीठानामुत्तमं पीठं जपात् सार्वज्ञ्यदायकम् ॥ ११८ ॥
योनिपीठे निवेश्यैव श्रोण्यां कमललोचने ।
योन्यां संक्षिप्तलिङ्गस्तु जपेत् तद्गतमानसः ॥ ११९ ॥
सहस्रं प्रत्यहं जप्त्वा कन्दर्पसदृशः पुमान् ।
जायते नात्र संदेहः सत्यं सुरगणार्चिते ॥ १२० ॥
चीनाचारविशेषं हि कथितं परमेश्वरि ।
ताराकल्पे महेशानि विस्तरेण प्रकाशितम् ॥ १२१ ॥
अत्र चैव महेशानि विशेषः कथितो मया ।
योनिकुन्तलमादाय गृह्णीयादन्तरीयकम् ॥ १२२ ॥
एवं वत्सरपर्यन्तं जपेत् तद्गतमानसः ।
नीलासरस्वती काली चान्नपूर्णा च भैरवी ॥ १२३ ॥
साधकाय प्रहृष्टाय प्रसीदति न संशयः ।
साधकोऽपि महादेवि वत्सरात् तां प्रपश्यति ॥ १२४ ॥
इह ते संशयो नास्ति सत्यं सत्यं महेश्वरि ।
अतिस्नेहात् सुरश्रेष्ठे प्रकाशितमिदं तव ॥ १२५ ॥
रहस्यं शृणु चार्वङ्गि येन सिद्ध्यति सुन्दरि ।
रजस्वलां स्त्रियं वीक्ष्य सहस्रं प्रजपेद्यदि ॥ १२६ ॥

तदैव मन्त्रसिद्धिः स्यान्नात्र कार्या विचारणा ।
दिनैः षोडशभिर्देवि सिद्धिमाप्नोति साधकः ॥ १२७ ॥
पर्वते हस्तमारोप्य निर्भयो यतमानसः ।
कवितां लभते सोऽपि अमृतत्वं च गच्छति ॥ १२८ ॥
नीलपद्मं तथा बिम्बं खञ्जनं शिखरं तथा ।
चामरं रविबिम्बं च तिलपुष्पं सरोवरम्[1] ॥ १२९ ॥
त्रिसूत्रं[2] वीक्ष्य जप्त्वा तु सततं शुद्धभावतः ।
सुखप्रसादं सुमुखं सुलोचनं सुहास्यदम् ॥ १३० ॥
सुकेशं सुगतिं कन्दं सुगन्धं सुखमेव च ।
लभते च यथासंख्यं शृणु पार्वति सादरम् ॥ १३१ ॥
महाचीनद्रुमे देवीं ध्यात्वा तत्र प्रपूज्य च ।
तद्द्रुमोद्भवपुष्पेण पूजयेद् भक्तिभावतः ॥ १३२ ॥
स भवेत् कुलदेवश्च कुलक्रमगतः शुचिः ।
अश्वत्थमहामूले देवीं ध्यात्वा यथाविधि ॥ १३३ ॥
ततस्तु धारासारेण तर्पयेद् मातृकानने ।
स भवेत् साधकश्रेष्ठो मातृणां च भवेत् प्रियः ॥ १३४ ॥
महाचीनद्रुमलतावेष्टितः साधकोत्तमः ।
रात्रौ यदि जपेद् मन्त्रं सर्वं कल्पद्रुमो भवेत् ॥ १३५ ॥
तिथिक्रमेण देवेशि लतया[3] वेष्टितो भवेत् ।
तदा मासेन सिद्धिः स्यात् सहस्रजपमानतः ॥ १३६ ॥
अष्टम्यां च चतुर्दश्यां द्विगुणं यदि जप्यते ।
तदैव महती सिद्धिर्देवानामपि दुर्लभा ॥ १३७ ॥
महाचीनद्रुमे बीजं लिखित्वा कुङ्कुमेन च ।
तत्पार्श्वे साध्यमालिख्य ताडयेद् दृष्टिवृष्टिभिः ॥ १३८ ॥

१ 'सरोरुहम्' ख. पाठः । २ 'त्रिशूलं' ख. पाठः । ३ 'लता' ख. पाठः ।

तत्र गच्छति कामार्ता यत्र यत्रोपलक्ष्यते ।
महाचीनद्रुमरसेनाक्तं पिण्डं विधाय च ॥ १३९ ॥
यन्नाम्ना दीयते देवि सोऽचिराद् मुक्तिमाप्नुयात् ।
महाचीनद्रुममूल-मज्जाभिर्बिल्वपत्रकैः ॥ १४० ॥
सहस्रं देवीमभ्यर्च्य श्मशाने साधकोत्तमः ।
तदा राज्यमवाप्नोति यदि सा न पलायते ॥ १४१ ॥
तस्यापि षोडशांशेन कलां नार्हन्ति ते शवाः ।
शवासनाधिकफलं लतागेहप्रवेशनम् ॥ १४२ ॥
धनकामस्तु यो विद्वान् महदैश्वर्यकामुकः ।
बृहस्पतिसमो यस्तु भवितुं कामयेद् नरः ॥ १४३ ॥
अष्टोत्तरशतं जप्त्वा कुलमामन्त्र्य मन्त्रवित् ।
मैथुनं यः प्रयात्येवं स तु सर्वफलं लभेत् ॥ १४४ ॥
लतारतेषु जप्तव्यं महापातकमुक्तये ।
लता यदि न संसर्गे तदा रेतः प्रयत्नतः ॥ १४५ ॥
समुत्सार्य जपेद् मन्त्रं धर्मकामार्थसिद्धये ।
सुरतेषु प्रजप्तव्यं महापातकमुक्तये ॥ १४६ ॥
वरासनस्थां संवीक्ष्य तन्मूले स्वेष्टदेवताम् ।
पूजयित्वा महारात्रौ त्रिदिनं पूजयेद् मनुम् ॥ १४७ ॥
लक्षपीठफलं देवि लभते नात्र संशयः ।
वेतालपादुकासिद्धिः खड्गसिद्धिश्च जायते ॥ १४८ ॥
अञ्जनं तिलकं गुप्तं प्रजप्य तु सहस्रकम् ।
स्वदेहरुधिराक्तैश्च बिल्वपत्रैः सहस्रकैः ॥ १४९ ॥
श्मशानेऽभ्यर्च्य देवीं तु वागीशसमतां व्रजेत् ।
श्मशाने योषितं मन्त्री संपूज्य ऋतुगां शुभाम् ॥ १५० ॥

रक्तचन्दनदिग्धाङ्गीं रक्तवस्त्रैरलङ्कृताम् ।
चारुपुष्पैर्मनुं प्रोच्य ततो ध्यायेच्च सुन्दरीम् ॥ १५१ ॥
रमित्वा तां लभेद्राज्यं यदि नात्र पलायते ।
मेषमाहिषरक्तेन वाग्मित्वं तस्य जायते ॥ १५२ ॥
धनित्वं जायते तस्य सर्वसिद्धिः प्रजायते ।
वचसा च भवेज्जीवो धनेन च धनाधिपः ॥ १५३ ॥
आज्ञया देवराजोऽसौ रूपेणैव मनोभवः ।
बलेन पवनो ह्येष सर्वतत्त्वार्थसाधकः ॥ १५४ ॥
शोधितं साधितं दद्यात् सास्थि मांसं सदा बलिम् ।
सर्वं सास्थि प्रदातव्यं तथा लोमसमन्वितम् ॥ १५५ ॥
एवंभूतः सदा देवि साधको भुवि दुर्लभः ।
यया कयाचित् दृष्ट्या वा यज्जपो भुवि दृश्यते ॥ १५६ ॥
एतत्प्रकाशनात् देवि मृत्युर्भवति नान्यथा ।
एतत्साधकनिन्दां वा एतन्मन्त्रस्य वा पुनः ॥ १५७ ॥
महाभूतगणैः सार्धं तस्य सर्वं हराम्यहम् ।
योगिनीचक्रसहिता स्वयं तद्वधकारिणी ॥ १५८ ॥
रहस्यं शृणु देवेशि येन वाग्मी भवेत् सदा ।
यस्मात् परतरं नास्ति तन्त्रमध्ये सुरेश्वरि ॥ १५९ ॥
सारस्वतप्रयोगोऽयं कथितो विश्वमोहने ।
विशेषं कथयिष्यामि सावधानावधारय ॥ १६० ॥
वीरतन्त्रे कथितं ते येन सर्वमयो भवेत् ।
जिह्वायां भावयेद् यस्तु तारिणीं दीपरूपिणीम् ॥ १६१ ॥
मातृकासहितां विद्यां त्रिरावर्त्य जलं पिबेत् ।
जलपानविधानेन मूकोऽपि सुकविर्भवेत् ॥ १६२ ॥

अजस्रभावनाभ्यासात् साधकः सुकृती सुधीः ।
कविर्वाग्मी महायोगी मुक्तिभागी भवेन्नरः ॥ १६३ ॥
अब्दाच्चतुर्विधं तस्य पाण्डित्यमुपजायते ।
अथ वक्ष्ये महेशानि रहस्यं परमाद्भुतम् ॥ १६४ ॥
युवतीनां तु योनौ तु लिखेद् मन्त्रान् मनोरमान् ।
संजप्य च महामन्त्रं सर्वसारस्वतप्रदम् ॥ १६५ ॥
सहस्रजपमानेन प्रयोगं च समाचरेत् ।
पश्चाद् भ्रमणयोगेन ताडयेद् योनिमण्डलम् ॥ १६६ ॥
सहस्रं च जपेत् तावद्यावद् रेतो न जायते ।
तेन तत्त्वेन देवेशि तर्पयेद् यतमानसः ॥ १६७ ॥
कवित्वं जायते सुभ्रु वाग्मित्वं च तथैव च ।
पण्डि(त)त्वं महत्त्वं च जायते नात्र संशयः ॥ १६८ ॥
रक्तपुष्पैर्महेशानि योनिपूजनमाचरेत् ।
युवतीरूपमास्थाय पूजयेद् बहुयत्नतः ॥ १६९ ॥
घृणां त्यक्त्वा महेशानि पूजयेद् योनिमण्डलम् ।
रहस्यं शृणु चार्वङ्गि येन सिद्धो भवेद् मनुः ॥ १७० ॥

(श्रीदेव्युवाच । )

भगवन् भूतभव्येश भूताधिप महाबल ।
प्रसीद देवदेवेश सर्वप्राणिहिते रत ॥ १७१ ॥
येनावश्यं भवेत् सिद्धिस्तदुपायं वद प्रभो ।

श्रीभैरव उवाच ।

शृणु देवि परं ज्ञानं सर्वज्ञानोत्तमोत्तमम् ।
येन विज्ञानमात्रेण शीघ्रं विद्या प्रसीदति ॥ १७२ ॥
मूलकन्दे च या शक्तिर्जगदाधाररूपिणी ।
तद्भ्रमावर्तवातो यः प्राण इत्युच्यते बुधैः ॥ १७३ ॥

झिल्लीशब्दा व्यक्ततरा कूजन्ती सततोत्थिता ।
गच्छन्ती ब्रह्मरन्ध्रेण प्रविशन्ती स्वकेतनम् ॥ १७४ ॥
यातायातक्रमेणैव तत्र कुर्यान्मनोलयम् ।
तेन मन्त्रे शिखा जाता सर्वमन्त्रप्रदीपिका ॥ १७५ ॥
तमःपूर्णे गृहे यद्वद् न किञ्चिदपि भासते ।
शिखाहीनास्तथा मन्त्रा न सिध्यन्ति कदाचन ॥ १७६ ॥
शिखोपदेशः सर्वत्र गोपितः परमेश्वरि ।
तेन विना न सिद्धिः स्याद् वर्षकोटिशतैरपि ॥ १७७ ॥
तस्मात् त्वयापि गिरिजे गोपनीयः प्रयत्नतः ।
सुप्ता निद्रायिता मत्ता विद्रावणरता परा ॥ १७८ ॥
समस्तदोषजालेन ग्रथिता[1] कुलसुन्दरि ।
+निशाचारं दिवाचारं सन्ध्याचारं च पल्लवम् ॥ १७९ ॥
दुर्लभं बीजसंयुक्तं[2] भावसंयोगमेव च ।
ज्ञात्वा प्रबोधयेद्वीरो गुरुस्तत्रैव कारणम् ॥ १८० ॥
निशाचारं महेशानि विशेषं कथयामि ते ।
वामदक्षिणनासायामुदये देवि तत्त्वतः ॥ १८१ ॥
स्वापकाले तु मन्त्राणां जपोऽनर्थफलप्रदः ।
स्वापकालो वामवाहो जागरो[3] दक्षिणावहः ॥ १८२ ॥
आग्नेयस्य मनोः सौम्यमन्त्रस्यैतद्विपर्ययः ।
प्रबोधकालं जानीयाद् मन्त्रयोरुभयोरपि[4] ॥ १८३ ॥
कर्मणोर्वह्नितारांद्याः वियत्प्रायाः समीरिताः ।
आग्नेय्योऽपि च सौम्याः स्युर्भूयिष्ठेन्द्वमृताक्षराः ॥ १८४ ॥

---

+स्वापे प्रहरे महानिशि चारो वामनाड्या वायोरुदयः। तथैव दक्षिण-नाड्या वायोरुदये दिवाचारः। संध्याचारस्तु उभयनाडीप्रवाहः ।

१ 'रहिता येन' ख. पाठः। २ 'संकेतं भावसंकेतं' ख. पाठः। ३ 'प्रबोधो' ख.
४ 'उभयोर्मन्त्रयोरपि' ख. पाठः ।

एवं पञ्चाशदाग्नेय्यो विद्याः सौम्याः प्रकीर्तिताः ।
वामवाहो यदा वायुर्दीर्घाणां योजनं तदा ॥ १८५ ॥
दक्षिणस्यां यदा वायुस्तदा ह्रस्वो नियोजितः ।
उभयस्थो यदा वायुस्तदा स्युरुभयात्मिकाः ॥ १८६ ॥
प्रणवं मातृकादेवी हृल्लेखेत्यमृतत्रयम् ।
अमृतत्रयसंयोगाद् दुष्टमन्त्रोऽपि सिद्ध्यति ॥ १८७ ॥
एवं शृणु वरारोहे सर्वसारं मनूत्तमम् ।
नियमः पुरुषैर्ज्ञेयो न योषित्सु कदाचन ॥ १८८ ॥
यद्वा तद्वा येन तेन सर्वतः सर्वतोऽपि च ।
योषितां ध्यानमात्रेण सिद्धयः स्युर्न संशयः ॥ १८६ ॥
यथाऽयस्कान्तमात्रेण गूढाविद्धशिलंत्वयः ।
स्वयमेव वहिर्याति यथा वा सौरतेजसा ॥ १६० ॥
सूर्यकान्तः स्फुटं भाति यथा चन्द्रस्य रश्मिभिः ।
चन्द्रकान्तो द्रावयाति यथा वर्षासु वारिदैः ॥ १६१ ॥
जलसेकातितृप्ता भू रसपूर्णा प्रचक्षते ।
क्षुधार्तः क्षीरपानेन यथा तृप्तोऽभिजायते ॥ १६२ ॥
पुष्पदर्शनमात्रेण गन्धर्वश्च सुखी भवेत् ।
कुलपुष्पप्रदानेन यथा शक्तिः प्रतुष्यति ॥ १६३ ॥
गुरुसेवैकमात्रेण मन्त्रसिद्धिर्भवेद् यथा ।
महापद्मवनं ध्यात्वा यथा सिद्धीश्वरो भवेत् ॥ १६४ ॥
त्रिपुराध्यानमात्रेण भुक्तिर्मुक्तिर्यथा भवेत् ।
महादुर्गाप्रसादेन यथा सिद्धीश्वरो भवेत् ॥ १६५ ॥
युवतीध्यानमात्रेण यथा कुलपतिर्भवेत् ।
गङ्गास्मरणमात्रेण निष्पापो जायते यथा ॥ १६६ ॥

तथाकर्षणमात्रेण शिव एव प्रजायते ।
कामाख्या योनिपूजायां यथा तुष्यति भैरवि ॥ १९७ ॥
योषिच्चिन्तनमात्रेण तथैव वरदायिनी ।
तस्मात् सर्वप्रयत्नेन दीक्षयेद्(द्वि?नि)जकौलिकीम् ॥ १९८ ॥
अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।
अनेनैव क्रमेणैव यः करोति क्रियां शुभाम् ॥ १९९ ॥
तस्य वंशे महेशानि बृहस्पतिसमः पुमान् ।
जायते नात्र सन्देहः सत्यं सत्यं सुरार्चिते ॥ २०० ॥
एकदा नारदं प्राप्य गौरी सर्वसुखान्विता ।
पप्रच्छ मधुरां भाषां शङ्करान्वेषणे रता ॥ २०१ ॥
देवर्षिरब्रवीद् वाक्यं शृणु हे नगनन्दिनि ।
ताराप्रयोगमेतं हि येन सिद्धिर्भविष्यति ॥ २०२ ॥

नारद उवाच ।

एकदेन्द्रः श्रिया भ्रष्टो विहाय चामरावतीम् ।
हिरण्याक्षपुरेऽगच्छत् सहितो देवसैन्यकैः ॥ २०३ ॥
देवारिभिः समं तत्र विरोधः सुमहानभूत् ।
पराजितो देवराजो बृहस्पतिपुरोधसः ॥ २०४ ॥
आश्रमे च पुनर्गत्वा विमृश्य विविधं शिवे ।
उवाच सादरं वाक्यं गुरुं प्राप्य जगद्गुरुम् ॥ २०५ ॥

(इन्द्र उवाच ।)

विश्वेषां पावनस्त्वं हि जगत्यस्मिंश्चराचरे ।
व्रजामि शरणं देव रक्ष मां भगवन् यतः ॥ २०६ ॥
उपायं ब्रूहि देवेश इन्द्रत्वं जायते यतः ।
केन रूपेण देवेश मम त्राणं भविष्यति ॥ २०७ ॥

बृहस्पतिरुवाच ।

देवेन्द्र शृणु मद्वाक्यं येन त्राणं भविष्यति ।
हिरण्याक्षपुरे देव दैत्याः सर्वारिमर्दकाः ॥ २०८ ॥
तेषां पराभवं कर्तुं न क्षमो जगतीतले ।
कारणं शृणु देवेश येनैव शृणु मद्वचः ॥ २०९ ॥
पुरा त्रेतायुगे राजन्नकरोर्नीलसाधनम् ।
तेन पुण्यफलेनैव इन्द्रत्वं गतवान् प्रिय ॥ २१० ॥
कालीतारासाधनं च नानारूपेणनि(स्तरं?स्तृतम्) ।
अकरोद् दैत्यपुत्रोऽसौ तस्मात् पुण्यफलादिदम् ॥ २११ ॥
येनोपायेन देवेश इन्द्रत्वं प्राप्स्यसि स्वयम् ।
तस्योपायं महाराज सावधानोऽवधारय ॥ २१२ ॥
धर्मेण वर्धते नित्यमधर्मान्न विवर्धते ।
येन रूपेण दैत्योऽसौ धर्मं संत्यजति द्रुतम् ॥ २१३ ॥
तमुपायं जगद्वन्द्य(ब्रूहि?शृणु)सत्यं वचो मम ।
वृद्धब्राह्मणरूपेण वञ्चयामि सुरेश्वर ॥ २१४ ॥
ततो विप्रो महान् भूत्वा वृद्धः पण्डितपावनः ।
सर्वशास्त्रार्थतत्त्वज्ञो हिरण्याक्षपुरं ययौ ॥ २१५ ॥
शृणु वत्स मद्वाक्यं येन भद्रं भविष्यति ।
अहं तु सर्वशास्त्रज्ञो निर्धनत्वादिहागतः ॥ २१६ ॥
वृत्तिं दत्त्वाध्यापकत्वमिति भिक्षा कृता मया ।
अध्यापकाय यो वृत्तिं दत्त्वाध्यापयति द्विजान् ॥ २१७ ॥
किं न दत्तं भवेत्तेन धर्मकामार्थमिच्छता ।
पुण्यात् पुण्यतरं पुण्यं जानीहि सर्वसंमतम् ॥ २१८ ॥
तथाऽस्त्वित्ति वचः(श्रु?क्त्)त्वा चाददद् वृत्तिमुत्तमाम् ।
अध्यापयामास द्विजान् दत्त्वा वृत्तिं मनोरमाम् ॥ २१९ ॥

कुतर्कैः शतशो देवि कृतस्तेन महीयसा ।
कुतर्केण महादेवि कुतर्कोऽयं महानपि ॥ २२० ॥
मोहितो दैत्यराजेन्द्रो येन दानवपुङ्गवः ।
कृते कर्मणि भूमिस्थैः स्वर्गे तृप्तिः कथं भवेत् ॥ २२१ ॥
तारिणी च महाकाली भवानी च महेश्वरी ।
तासां पूजा वृथा देव किमर्थं क्रियतेऽशुभा ॥ २२२ ॥
एवं बहुविधेनैव कुतर्केण महानपि ।
मोहितो दैत्यराजोऽसौ धर्मं त्यक्त्वा महेश्व(री?रि) ॥ २२३ ॥
अधर्मनिरताः सर्वे धर्मं त्यक्त्वा महेश्वरि ।
कालक्रमेण तेषां तु आपदः परमाः शुभे ॥ २२४ ॥
ततो बृहस्पतिर्देवो देवराजगृहं ययौ ।
इन्द्राय सर्वमाचख्यौ दैत्यानां कर्मबन्धनम् ॥ २२५ ॥
शृणु चैकाग्रमनसा येन ते कुशलं महत् ।
जायते नात्र संदेहो देवराज जगत्पते ॥ २२६ ॥
तारिणीं कालिकां चैवान्नपूर्णां भैरवीं पराम् ।
संपूज्य विधिवद्भक्त्या सर्वसिद्धिर्भविष्यति ॥ २२७ ॥
पूजाविधानं देवेश श्रोतुमर्हस्यसंशयम् ।
प्राङ्गने मध्यमे रात्रौ फाल्गुने मासि सुन्दर ॥ २२८ ॥
चतुर्दिक्षु महेशान कदलीस्तम्भमुत्तमम् ।
आत्म(ने?नो)ऽग्रे च देवेश मण्डपं कारय प्रिय ॥ २२९ ॥
चूताश्वत्थवटैर्दे(वि?व)च्छन्नं कुर्याच्च मण्डपम् ।
कुमारीवेष्टितं कुर्याद् मण्डपं सर्वमोहनम् ॥ २३० ॥
तारामूर्तिं तथा कालीमूर्तिं वा देवराजक ।
सर्वकार्यप्रदां देव तां कुरुष्व महेश्वर ॥ २३१ ॥

अन्नदामूर्तिमेतां हि कुरु वा सुरवन्दित ।
वटपत्रे महादेव्यै बलिं यत्नेन दापयेत् ॥ २३२ ॥
आसनं कम्बलं दद्यात् स्वागतं मधुनिर्मितम् ।
पाद्यं तु पयसा दद्यादर्घ्यं दद्यात् कुशेन च ॥ २३३ ॥
मधुपर्कं घृतेनैव जलेनाचमनीयकम् ।
तक्रेण स्नानमाचर्य्य वसनं लोहितं स्मृतम् ॥ २३४ ॥
रजताभरणं दद्यात् सर्वदेवमनोहरम् ।
तण्डुलेन विना देव्यै नैवेद्यं दापयेत् प्रिय ॥ २३५ ॥
चर्व्यं चोष्यं तथा लेह्यं पेयं दद्याद् मनोहरम् ।
रक्तचन्दनबीजैश्च जपेदष्टसहस्रकम् ॥ २३६ ॥
शुक्लप्रतिपदारभ्यमष्टम्यां च समापयेत् ।
बलिं दद्याद् महादेव्यै छागेन महिषेण वा ॥ २३७ ॥
अन्नं मत्स्यं तथा मांसं घृतं परमशोभनम् ।
पिष्टकं परमं द्रव्यं दद्याद् देव्यै मनोहरम् ॥ २३८ ॥
होमयेद् देवदेवेश यथाशक्ति विधानतः ।

श्रीभैरव उवाच ।

कुमारीं पूजयेद् यत्नैर्द्रव्यैर्बहुविधैरपि ॥ २३९ ॥
होमादिकं तु सकलं कुमारीपूजनं विना ।
परिपूर्णफलं नैव सकलं पूजनं भवेत् ॥ २४० ॥
ततः सकलसिद्ध्यर्थं कुमारीं तु प्रपूजयेत् ।
आनयेत् कन्यकां योग्यां कुमारीं तु सुवासिनीम् ॥ २४१ ॥
सुवासिनीं मदप्रौढां संशयं त्यज सुन्दरि ।
कथयामि न सन्देहः कुमारीपूजनं शुभम् ॥ २४२ ॥
यस्याः पूजनमात्रेण त्रैलोक्यपूजनं भवेत् ।
कुमारी च महेशानि त्रिधा मूर्तिर्व्यवस्थिता ॥ २४३ ॥

परापरात्मिका चैव तृतीया च परापरा ।
यत्र काले न किञ्चित् स्याद् देवासुरमहोरगाः ॥ २४४ ॥
त्रैलोक्यं न त्वमहं तदा जाता कुमारिका ।
आद्यसृष्टिकरी या तु प्रत्यक्षा साभवत् त्रिधा ॥ २४५ ॥
उमाकला तु सा जाता सृष्टिरूपा भवान्तरे ।
एकवर्षा भवेत् सन्ध्या द्विवर्षा च सरस्वती ॥ २४६ ॥
त्रिवर्षा च त्रिधा मूर्तिश्चतुर्वर्षा च कालिका ।
सुभगा पञ्चवर्षा च षड्वर्षा तु उमा भवेत् ॥ २४७ ॥
सप्तभिर्मालिनी चैव अष्टवर्षा च कुब्जिका ।
नवभिः कालसङ्कर्षा दशभिश्चापराजिता ॥ २४८ ॥
एकादशे तु रुद्राणी द्वादशाब्दे तु भैरवी ।
त्रयोदशे महालक्ष्मीर्द्विसप्ता पीठनायिका ॥ २४९ ॥
क्षेत्रज्ञा पञ्चदशभिः षोडशे चर्चिका मता ।
एवं क्रमेण संपूज्या यावत्पुष्पं न जायते ॥ २५० ॥
प्रतिपदादिपूर्णान्तं वृद्धिभेदेन पूजयेत् ।
महापर्वसु सर्वेषु विशेषाच्च पवित्रके ॥ २५१ ॥
महानवम्यां देवेशि कुमारीं च प्रपूजयेत् ।
पिङ्गलां पूजयेद् यस्तु षोडशे चैकभक्तिमान् ॥ २५२ ॥
भक्तितः पूजयित्वा तु सर्वसंपत्तिमान् भवेत् ।
पूजयेत् कुलविद्यानामेकैकां कुलभैरवीम् ॥ २५३ ॥
एवं प्रणवयोगेन चैतन्यं तत्त्वमर्चयेत् ।
प्रणवस्य विशेषं हि जानीहि नगनन्दिनि ॥ २५४ ॥
यज्ज्ञानात् साधकाः सर्वे भवन्ति मुक्तिभागिनः ।
योनिर्बिन्दुमती चैव मायाबीजं ततः परम् ॥ २५५ ॥

१ 'देवी' ख. पाठः । २ 'मनुं' ख. पाठः ।

ततो लक्ष्मीं समुच्चार्य कुर्याद् मायां महेश्वरि ।
‡प्रणवाः पञ्च विख्याताः सर्वपापहराः शुभे ॥ २५६ ॥
भैरवीबीजमाख्यातं प्रेतबीजं मनोहरम् ।
एकं द्वाभ्यां त्रिभिश्चैव सप्तभिर्वाष्टभिः पुनः ॥ २५७ ॥
महाभयानि दुर्भिक्षाद्युत्पातानि कुलेश्वरि ।
दुःस्वप्नमपमृत्युश्च अन्ये ये ये समुद्भवाः ॥ २५८ ॥
कुमारीपूजनादेव न तस्य प्रभवन्ति हि ।
नित्यक्रमेण देवेशि पूजयेद्विधिपूर्वकम् ॥ २५९ ॥
घ्नन्ति विघ्नान् पूजितास्तास्तथा शत्रून् महोत्कटान् ।
व्याधयः सर्वरिष्टानि दुर्निमित्तान्यसंशयम् ॥ २६० ॥
ग्रहा यक्षाः क्षयं यान्ति भूतवेतालपन्नगाः ।
असुरा गुह्यकाः प्रोक्ता योगिनी गुह्यडाकिनी ॥ २६१ ॥
अणिमादीनि वेतालभैरवादीनि चैव हि ।
तुष्यन्ति दिव्यवेतालो भवेत् कुमारिकार्चनात् ॥ २६२ ॥
ऐंकारेण जलं देयं ह्रींकारात् पादशोधनम् ।
श्रींकारेण महेशानि अर्घ्यं दद्याद् महेश्वरि ॥ २६३ ॥
कूर्चबीजेन देवेशि दद्याच्चन्दनमुत्तमम् ।
शक्तिबीजेन पुष्पाणि सर्वैः धूपांश्च दापयेत् ॥ २६४ ॥
वाग्भवं च ततो मायां सुन्दरीति ततः परम् ।
ङेऽन्तं पश्चिमवक्त्रं च हृदन्तेन न्यसेत् प्रि(य?ये) ॥ २६५ ॥
योनियुक्तः शान्तवर्णो बिन्दुयुक्तः सुरार्चिते ।
कुमारिके पदं प्रोच्य शिरसे वह्निवल्लभा ॥ २६६ ॥
वेदादिं च ततो मायां स्वबीजं तदनन्तरम् ।
शिखायै वषडित्युक्तं भैरवप्राणवन्दिते ॥ २६७ ॥

‡ ऐंह्रींश्रींहूंह्रीं एते पञ्च प्रणवाः ।

प्रणवं काकिनीं चैव बिन्दुयुक्तां सनातनीम् ।
वागीश्वरी-पदं चोक्त्वा कवचाय हुमीरितम् ॥ २६८ ॥
मायाबीजं समुच्चार्य अस्त्राय फडिति क्रमात् ।
वाग्भवं च सिद्धि-पदं जयाय तदनन्तरम् ॥ २६९ ॥
पूर्ववक्त्राय देवेशि हृदन्तेन प्रपूजयेत् ।
पुनर्वाग्भवबीजं ङेयुतमुत्तरवक्त्रकम् ॥ २७० ॥
नमोन्तेन महादेवि पूजयेत् सुरसुन्दरीम् ।
प्रणवं च महेशानि कालिके-पदमन्तरम् ॥ २७१ ॥
दक्षवक्त्राय तत्पश्चाद् नमोन्तं भैरवप्रिये ।
वाग्भवेन पुरक्षोभं मायाबीजे गुणाष्टकम् ॥ २७२ ॥
श्रीबीजेन श्रियो लाभो ह्रींबीजेनारिसंक्षयः ।
भैरवेण तु बीजेन खड्गानामपराजितम् ॥ २७३ ॥
कुमारिकाष्टकं वाथ सदा त्वं च कुमारिका ।
अष्टोत्तरशतं वापि एकां कन्यां प्रपूजयेत् ॥ २७४ ॥
पूजिताः पूजयन्त्येता निर्दहन्त्यवमानिताः ।
कुमारी योगिनी साक्षात् कुमारी सर्वदेवताः ॥ २७५ ॥
भूर्भुवर्मूर्तिका देवी कुमारी च प्रपूजिता ।
असुरा दुष्टनागाश्च ये ये दुष्टग्रहा अपि ॥ २७६ ॥
भूतवेतालगन्धर्व-डाकिनीयक्षराक्षसाः ।
हृदयं देवताः सर्वे भूर्भुवश्चैव भैरवि ॥ २७७ ॥
पृथिव्यादीनि सर्वाणि ब्रह्माण्डं सचराचरम् ।
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ २७८ ॥
ते तुष्टाः सर्वतुष्टाश्च कुमारीं यः प्रपूजयेत् ।
कालाग्निशिवपर्यन्तं तथा गौर्यादिसंस्थितिः[1] ॥ २७९ ॥

---

१ 'चर्यादि' ग. पाठः ।

सप्तद्वीपाः समुद्राश्च भुवनानि चतुर्दश ।
विधिना वै कुमारीं च भोजयेच्चैव भैरवीम् ॥ २८० ॥
पाद्यमर्घ्यं तथा धूपं कुङ्कुमं चन्दनं तथा ।
भक्तिभावेन संपूज्य सर्वं त(स्यै?स्या) निवेदयेत् ॥ २८१ ॥
प्रदक्षिणात्रयं कुर्याद् आदौ मध्ये तथान्ततः ।
पश्चाच्च दक्षिणा देया रजतस्वर्णमौक्तिकैः ॥ २८२ ॥
विवाहयेत् स्वयं कन्यां ब्रह्महत्या विनश्यति ।
गवां हत्या स्त्रिया हत्या सर्वं पापं प्रणश्यति ॥ २८३ ॥
माता चैव पिता चैव भ्रातरश्च विशेषतः ।
ये च यत्र पुरः[1] सर्वे कन्यादानं प्रकल्पयेत् ॥ २८४ ॥
भुक्तिमुक्तिफलं तस्य सौभाग्यं सर्वसंपदः ।
रुद्रलोके वसेद् नित्यं त्रिनेत्रो[2] भगवान् हरः ॥ २८५ ॥
षष्टिकोटिसहस्राणि अश्वमेधफलं लभेत् ।
एतत् फलं लभेद् मर्त्यः कन्यां यस्तु विवाहयेत् ॥ २८६ ॥
वालुकाः सागरे यावत् तावदब्दं महेश्वरि ।
एकैकं कुलमुद्धृत्य सत्यकल्पे गतोऽपि च ॥ २८७ ॥
तावत् स भुङ्क्ते भोगांश्च यावद्भूमिदिवौकसः ।
कन्यादानं महादानं सर्वदानेषु चोत्तमम् ॥ २८८ ॥
दौर्भाग्यं नश्यति क्षिप्रं सौभाग्यं च प्रवर्धते ।
राजद्वारे लभेत् पूजां राजलक्ष्मीः स्थिरायते ॥ २८९ ॥
सर्वाः कुमारिकाश्चैव पूजयेद् भक्तिभावतः ।
महाभये समुत्पन्ने यस्तु कन्यां प्रपूजयेत् ॥ २९० ॥
तत्क्षणाल्लभते मोक्षं सत्यं सत्यं न संशयः ।
इति ते कथितं देवि कुमारीपूजनक्रमम् ॥ २९१ ॥

---

१ 'पुनः' ख. पाठः । २ 'नियतो' ख. पाठः ।

विशेषलक्षणं चैव कथयिष्यामि संशृणु ।
तस्मात् परतरं नास्ति(भ?त)न्त्रमध्ये महेश्वरि ॥ २६२ ॥
कुमारीं पूजयित्वा च शिवत्वं गतवानहम् ।
कृष्णत्वं गतवान् कृष्णो ब्रह्मत्वं गतवान्(मुदा?विधिः) ॥ २६३ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (निग्रहादिप्रयोग-कुमारीपूजाक्रमनिरूपणं) सप्तमः पटलः ॥ ७ ॥

अथ

## अष्टमः पटलः ।



श्रीभैरव उवाच ।

यन्त्रं शृणु वरारोहे येन सिद्ध्यति निश्चितम् ।
ततो लिखेद् यन्त्रराजं समस्तपुरुषार्थदम् ॥ १ ॥
यस्य विज्ञानमात्रेण सद्यः खेचरतां व्रजेत् ।
आदौ त्रिकोणं विन्यस्य त्रिकोणं तद्बहिर्न्यसेत् ॥ २ ॥
बहिस्त्रिकोणमालिख्य षट्कोणं तद्बहिर्न्यसेत् ।
मध्ये तु बैन्दवं चक्रं मायाबीजविभूषितम् ॥ ३ ॥
षट्कोणं तद्बहिर्वृत्तं ततश्चाष्टदलं लिखेत् ।
बहिर्वृत्तेन संयुक्तं भूपुरेणैव संवृतम् ॥ ४ ॥

ज्ञात्वैवं मुक्तिमायाति यन्त्रमेतन्न संशयः ।
एतत्तु विलिखेत् ताम्रे कुण्डगोलविलेपिते ॥ ५ ॥
स्वयंभूकुसुमैर्युक्ते कुङ्कुमागुरुसंयुते ।
शुद्धासने च पशुभिरदृष्टे पुरतो न्यसेत् ॥ ६ ॥
अर्घ्यद्रव्यमर्घ्यपात्रे निक्षिपेत् पुरतः सुधीः ।
ततोऽर्घ्यं कारयेद् मन्त्री तया नार्या सुवेशया ॥ ७ ॥
कुण्डगोलोद्भवं द्रव्यं सुयंभूकुसुमं तथा ।
नाधर्मो जायते सुभ्रु महामन्त्रस्य साधने ॥ ८ ॥
ततो पीठक्रमेणैव यन्त्रपूजां समाचरेत् ।
ततो हृदयपद्मान्तः स्फुरन्तीं परमेश्वरीम् ॥ ९ ॥
सुषुम्नावर्त्मना नीत्वा शिरःस्थानं महेश्वरि ।
ततो वै स्वकराम्भोजपुष्पराशौ समानयेत् ॥ १० ॥
नासया वामया देवि वायुबीजेन मन्त्रवित् ।
देवेशि भक्तिसुलभे परिवारसमन्विते ॥ ११ ॥
यावत् त्वां पूजयिष्यामि मातर्देवि इहावह ।
इत्यनेन च मन्त्रेण देवीमावाहयेत् सुधीः ॥ १२ ॥
आवाह्य देवीं तामिष्ट्वा चोपचारैर्निवेश्य च ।
कालीं कपालिनीं कुल्लां कुरुकुल्लां विरोधिनीम् ॥ १३ ॥
विप्रचित्तां पूजयेच्च बहिः षट्कोणके तथा ।
उग्रामुग्रप्रभां दीप्तां तन्मध्ये च त्रिकोणके । १४ ॥
मात्रां मुद्रां मितां चैव पूजयेदपर–त्रिके ।
सर्वाः श्यामा असिकरा मुण्डमालाविभूषिताः ॥ १५ ॥
तर्जनीं वामहस्तेन धारयन्त्यो दिगम्बराः ।
देवतादक्षिणे भागे महाकालं समर्चयेत् ॥ १६ ॥

ततः स्तुत्वा नमस्कृत्य कुर्यात् संमेलनं धिया ।
देवताग्रे तु संभोगं देवताप्रीतिकारकम् ॥ १७ ॥
संभोगं तु पुरस्कृत्य देवीमिह विसृज्य च ।
कृतकृत्यो भवेन्मन्त्री नात्र कार्या विचारणा ॥ १८ ॥
इदानीं शृणु देवेशि उपचारान् विशेषतः ।
प्रथमं तु सुरा पूज्या माध्वी गौडी तथैव च ॥ १९ ॥
पैष्टी तस्या अभावेन आतिदेशिकमाचरेत् ।
नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु ॥ २० ॥
गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ।
ताम्बूलं च सकर्पूरं नारिकेलं सशर्करम् ॥ २१ ॥
पायसं सघृतं चैव आर्द्रकं सगुडं तथा ।
तण्डुलं सतिलं चैव तालं खर्जूरमेव च ॥ २२ ॥
कदलीं तिन्तिडीं चैव श्रीफलं फलमुत्तमम् ।
अन्यानि च सुगन्धीनि स्वादूनि च फलानि च ॥ २३ ॥
नरश्छागस्तथा मेषो महिषः शशकस्तथा ।
शरभः शूकरश्चैव बलयः परिकीर्तिताः ॥ २४ ॥
कृष्णमार्जारकश्चैव ज्ञातव्या मन्त्रवित्तमैः ।
एतेषां चैव रक्तानि देयानि परमेश्वरि ॥ २५ ॥
जलं सुवासितं देयं कुलक्षालनमेव च ।
नैवेद्यानि प्रधानानि कथितानि मया प्रिये ॥ २६ ॥
येन संतुष्यते देवि कुमारी वरवर्णिनी ।
तं दद्यात् परमेशानि किमन्यच्छ्रोतुमिच्छसि ॥ २७ ॥
पुष्पितायाः कुलागारं स्पृष्ट्वा जपति यो नरः ।
अयुतैकप्रमाणेन साधकः स्थिरमानसः ॥ २८ ॥

नटी कापालिनी वेश्या रजकी ब्राह्मणी शुभा ।
शूद्रकन्या निशः स्त्री च च्त्रि(यी१या) सर्वदायिनी ॥ ५३ ॥
एतासां कांश्चिदानीय ततस्तद्योनिमण्डले ।
पूजयित्वा महादेवीं ततो मैथुनमाचरेत् ॥ ५४ ॥
धर्माधर्महविर्दी(प्ता१प्ते) आत्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ ५५ ॥
स्वाहान्तोऽयं महामन्त्र आरम्भे परिकीर्तितः ।
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचम् ॥ ५६ ॥
धर्माधर्मफलस्नेहपूर्णां वह्नौ जुहोम्यहम् ।
स्वाहान्तोऽयं महामन्त्रः शुक्रत्यागे प्रकीर्तितः ॥ ५७ ॥
ततो गच्छेत् प्रियां गच्छन् देवीं त्रिभुवनेश्वरीम् ।
तच्छ्रुत्वा वचनं विष्णुर्मां पुनरभ्यभाषत ॥ ५८ ॥
नमोऽस्तु ते महादेव सर्वतत्त्वात्मरूपिणे ।
त्वत्प्रसादादयं देव संशयो मे महान् गतः ॥ ५९ ॥
अनुजानीहि देवेश गमिष्यामि यथासुखम् ।
ततो मयाभ्यनुज्ञातः प्रणम्य च यथाविधि ॥ ६० ॥
ययौ स्वभवनं विष्णुरेतत् ते कथितं प्रिये ।
इदानीं शृणु देवेशि मन्त्रराजं मनोरमम् ॥ ६१ ॥
अत्र श्रीमन्त्रराजस्य माहात्म्यं शृणु पार्वति ।
श्रद्धया यत्र देवेशि परां मुक्तिमवाप्स्यति ॥ ६२ ॥
अश्वमेधैश्च गोमेधैर्नरमेधैस्तथा परैः ।
दानैश्च विविधैर्द्रव्यैर्होमैर्नानाविधैरपि ॥ ६३ ॥
अनेकजन्मसाहस्रैस्तपोभिः प्राप्यते परा ।
विद्याराज्ञी घोरकाली अनिरुद्धसरस्वती ॥ ६४ ॥

१ 'कला' ख. पाठः ।

ज्ञात्वैव मुक्तिमाप्नोति किं पुनः कथ्यते परम् ।
अस्य ज्ञानप्रभावेण सिद्धयोऽष्टौ भवन्ति हि ॥ ६५ ॥
मन्त्रस्य ज्ञानमात्रेण विजयी भुवि जायते ।
तस्यालोकनमात्रेण वादिनो निष्प्रभा मताः ॥ ६६ ॥
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ।
वह्नेः शैत्यं जलस्तम्भं गतिस्तम्भं विवस्वतः ॥ ६७ ॥
दिवारात्रिव्यत्ययं च वशीकर्तुं क्षमो भवेत् ।
बृहस्पतिसमो वाग्मी सुकविर्भार्गवो भवेत् ॥ ६८ ॥
धने कुबेरसदृशस्तेजसा भास्करोपमः ।
बलेन सदृशो रामे विष्णुतुल्यपराक्रमः ॥ ६९ ॥
ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमात् ।
सद्यो निर्दोषमायाति मन्त्रस्यास्य प्रसादतः ॥ ७० ॥
एवं संक्षेपतो वक्ष्ये नास्ति मन्त्रसमोऽधुना ।
सौरे च गाणपत्ये च चान्द्रे वैष्णव एव च । ७१ ॥
नान्यद् विस्तरतो वक्तुं शक्यते परमेश्वरि ।
वक्त्रैः कोटिसहस्रैस्तज्जिह्वाकोटिशतैरपि ॥ ७२ ॥
निजमुद्धृत्य देवेशि आगस्करं द्वितीयकम् ।
वाणीं चैव महेशानि वर्णत्रयमुदाहृतम् ॥ ७३ ॥
अनेन मन्त्रराजेन सदृशं नापरं प्रिये ।
तव स्नेहाद् वरारोहे प्रकाशमुपपादितम् ॥ ७४ ॥
न वक्तव्यं न वक्तव्यं न वक्तव्यं महेश्वरि ।
तव स्नेहेन कथितं प्राणवद्धि सुरेश्वरि ॥ ७५ ॥
कुमारीपूजनेनैव दक्षिणाविधिरुत्तमा ।
कथिता देवि भद्रं ते अप्रकाश्यं प्रकाशितम् ॥ ७६ ॥

केवलं शुद्धभावेन स तु विद्यानिधिर्भवेत् ।
संस्कृताः प्राकृताः शब्दा लौकिका वैदिकास्तथा ॥ २९ ॥
वशमायान्ति ते सर्वे साधकस्य न चान्यथा ।
मुक्तकेशो हविष्याशी प्रजपेदयुतं नरः ॥ ३० ॥
नग्नां परस्त्रियं स्पृष्ट्वा प्रजपेत् स्थिरमानसः ।
तस्यालोकनमात्रेण वादिनो निष्प्रभा गताः ॥ ३१ ॥
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ।
धनकामस्तु यो विद्वान् महदैश्वर्यकामुकः ॥ ३२ ॥
बृहस्पतिसमो यस्तु भवितुं कामयेन्नरः ।
सुन्दरीं यौवनोन्मत्तां नारीमानीय यत्नतः ॥ ३३ ॥
अष्टोत्तरशतं जप्त्वा कुलमामन्त्र्य मन्त्रवित् ।
मैथुनं यः करोत्येव स तु विद्यानिधिर्भवेत् ॥ ३४ ॥
विपरीतरता सा तु भुवि श्रीर्हृदयोपरि ।
तन्मुखे चुम्बनं दत्त्वा सहस्रं मानसं जपेत् ॥ ३५ ॥
स भवेत सर्वसिद्धीशो नात्र कार्या विचारणा ।
सर्वेषां साधनानां हि श्रेष्ठं स्यात् कुलसाधनम् ॥ ३६ ॥
तस्मात् सर्वप्रयत्नेन साधयेत् तं समाहितः ।
इदानीं शृणु देवेशि रहस्यमिदमुत्तमम् ॥ ३७ ॥
पुरा दारुवने रम्ये उन्मत्ता रागमोहिताः ।
परस्त्रियं धर्षयन्ति मद्यं स्वादन्ति नित्यशः ॥ ३८ ॥
तद् दृष्ट्वानुचितं कर्म विष्णुना समुपस्थितम् ।

श्रीविष्णुरुवाच ।

देवदेव महादेव सर्वदेव दयानिधे ॥ ३९ ॥
देवदारुवने पापा मद्यपानरतातुराः ।
परस्त्रियं धर्षयन्ति मुनयो रागमोहिताः ॥ ४० ॥

दिगम्बरास्तथा मूढाः संप्रयास्यन्ति कां गतिम् ।
इति तस्य वचः श्रुत्वा तमुवाच त्वहं प्रिये ॥ ४१ ॥
कालिका या महाविद्या ह्यनिरुद्धसरस्वती ।
विद्याराज्ञीति या प्रोक्ता एते तन्मन्त्रजापकाः ॥ ४२ ॥
परं मुक्ता भविष्यन्ति तद्गायत्रीं जपन्ति च ।
एतस्यास्तु प्रभावेण सर्वे देवा विमोचिताः ॥ ४३ ॥
निजमातृवधात् सोऽपि परशुरामो विमोचितः ।
दत्तात्रेयश्चात्रिपुत्रः सुरापानाद् विमोचितः ॥ ४४ ॥
गोतमस्त्रीधर्षणाच्च देवेन्द्रोऽपि विमोचितः ।
चाण्डालीगमनात् पूर्वं वशिष्ठश्च विमोचितः ॥ ४५ ॥
गुरुदाराधर्षणाच्च चन्द्रमाश्च विमोचितः ।
ब्रह्मणस्तु शिरश्छेदाच् शिवः सोऽहं विमोचितः ॥ ४६ ॥
रावणस्य वधाच्चापि रामचन्द्रो विमोचितः ।
तमेव गूढं वक्ष्यामि श्रुत्वा गोप्यः सदा बुधैः ॥ ४७ ॥
कालिकायै पदं चोक्त्वा विद्महे तदनन्तरम् ।
ततः श्मशानवासिन्यै धीमहीति पदं ततः ॥ ४८ ॥
तन्नो घोरी-पदं चोक्त्वा ततः कामः प्रचोदयात् ।
एषा तु कालीगायत्री दशधा जप्तयानया ॥ ४९ ॥
ब्रह्महत्यादिपापानि खण्डं खण्डं व्रजन्ति हि ।
अनया सदृशी विद्या अनेन सदृशो जपः ॥ ५० ॥
अनेन सदृशं ज्ञानं न भूतं न भविष्यति ।
अन्यच्च शृणु देवेशि यथा पानादिकर्मणि ॥ ५१ ॥
कुमारीसाधनादीनि अनया साधयेच्छुभे ।
लीलया च महेशानि सिद्धिर्भवति निश्चितम् ॥ ५२ ॥

(श्रीदेव्युवाच ।)

इदानीं(शृणु¹देव)कस्यास्ति घोरे कलियुगे शुभे ।
प्राधान्यं परमेशान तद्वदस्व सदाशिव ॥ १०१ ॥

श्रीभैरव उवाच ।

कलिनाम्नि युगे देवि प्रधानां तारिणीं शुभाम् ।
कालीं चैव महेशानि अनिरुद्धसरस्वतीम् ॥ १०२ ॥
श्मशानकालिकायास्तु प्राधान्यं शृणु भैरवि ।
सर्वसिद्धेः कारणं हि अनिरुद्धसरस्वती ॥ १०३ ॥
तस्या मन्त्रेण मन्त्री स्यात् सर्वसिद्धिफलप्रदः ।
तारामन्त्रं पूर्वमुक्तं कालीमन्त्रं शृणुष्व मे ॥ १०४ ॥
मायाद्वन्द्वं कूर्चयुग्मं निजवीजत्रयं तथा ।
दक्षिणे कालिके चेति संहारक्रमतः शुभे ॥ १०५ ॥
पूर्ववीजानि चोद्धृत्य स्वाहान्तोऽयं मनुः स्मृतः ।
विद्याराज्ञीति विख्याता मन्त्रश्च कल्पपादपः ॥ १०६ ॥
अस्मात् परतरं नास्ति कालीमन्त्रं मनोरमम् ।
तस्मात् सर्वप्रयत्नेन मन्त्रराजं शृणुष्व मे ॥ १०७ ॥
मन्त्रस्य ज्ञानमात्रेण जीवन्मुक्तश्च साधकः ।
एषा विद्या(रहस्या तु) पूजने जपने तथा ॥ १०८ ॥
ध्याने तथा कुलाचारे सर्वविद्यागमेषु च ।
उच्चाटनं मारणं च वशीकरणमुत्तमम् ॥ १०९ ॥
आकर्षणं स्तम्भनं च विद्वेषणमतः परम् ।
अनया साधयेद् देवि सिद्ध्यत्येव न संशयः ॥ ११० ॥
पूजां च विविधां कुर्यात् स्वशाखोक्तक्रमेण च ।
रक्तपुष्पैः पूजयित्वा सहस्रं होमयेदथ ॥ १११ ॥

---

१ 'त्रयं त्रयम्' ख. पाठः ।

सा तु काममयी नारी निर्लज्जा काममोहिता ।
स्वयं(सान्त्याष्य?सन्त्यज्य)भर्तारं साधकं गच्छति ध्रुवम् ।११२।
अयुतं च जपेद् देवि ध्यात्वा देवीं दिगम्बरीम् ।
स्थावरा जङ्गमाश्चैव पातालतलगा अपि ॥ ११३ ॥
आकर्षयति मन्त्री च तत्क्षणाद् भुवि संस्थिताः ।
जप्त्वा देवीं श्मशाने च ध्यात्वा देवीं दिगम्बरीम् ॥ ११४ ॥
तद्भस्मलेपनं कुर्यात् ततः संहरते जगत् ।
श्वेतापराजितापुष्पैः पूजयेद् भक्तिभावतः ॥ ११५ ॥
हुत्वायुतं श्मशानेऽपि विश्वमुच्चाटयेद् ध्रुवम् ।
नारीं नग्नां श्मशाने च स्पृष्ट्वा च योनिमण्डलम् ॥ ११६ ॥
जपित्वा च वशीकुर्याद् यदि सा न पलायते ।
कृष्णपुष्पैः पूजयित्वा ध्यात्वा चैव दिगम्बरीम् ॥ ११७ ॥
जप्त्वायुतं श्मशानस्थः शत्रूणां मारणं चरेत् ।
कालीकल्पस्वरूपं च कथितं सुन्दरि प्रिये ॥ ११८ ॥
गोपने सर्वसिद्धिः स्याद् नात्र कार्या विचारणा ।
यथा काली तथा नीला चानिरुद्धसरस्वती ॥ ११९ ॥
तस्माच्च कथिता विद्या काली काली(कलौ युगे) ।
रहस्यं शृणु चार्वङ्गि कुण्डल्याश्चक्रनिर्णये ॥ १२० ॥
आसनं जीवनस्येदममृतं देहरक्षकम् ।
निर्गुणं शाम्भवं चक्रं त्रिविधं शृणु पार्वति ॥ १२१ ॥
येन विज्ञानमात्रेण ध्रुवं ज्योतिर्मयो भवेत् ।
इडापिङ्गलयोर्मध्ये वर्णाश्च ज्योतीरूपिणः ॥ १२२ ॥
ज्योतीरूपाणि चक्राणि ज्योतीरूपा च कुण्डली ।
चन्द्रतः सूर्यपर्यन्तं चक्राण्यत्र चतुर्दश ॥ १२३ ॥

पूजाविधिरयं प्रोक्तः कुत्र वा पूज्यते शिवा ।
कुत्र वा ध्यायते देवी तं शृणुष्व महेश्वरि ॥ ७७ ॥
कामरूपे पूर्णगिरौ कोङ्कटे चोड्डीयानके ।
वाराणस्यां तु लौहित्ये करतोयानदीजले ॥ ७८ ॥
आर्यावर्ते प्रयागे च ब्रह्मावर्ते तथैव च ।
अनन्तफलदा पूजा सर्वत्रैव जले स्थले ॥ ७९ ॥
तदभावे शून्यगेहे सिन्दूरादिविलेपिते ।
कर्त्रिशूलधनुःखड्ग–घण्टाचामरकादिभिः ॥ ८० ॥
वितानध्वजसंकीर्णे कृष्णागुरुसुधूपिते ।
सुदतीनां सुकेशीनां वेश्यानां गानशोभिते ॥ ८१ ॥
घण्टानादरवाकीर्णे दीपावलीपरिष्कृते ।
एवंभूतगृहे पूज्या तारा चैव सुशोभना ॥ ८२ ॥
श्मशाने च सदा पूज्या पीठादप्यधिका मता ।
तारिण्यास्तु श्मशानात्तु नान्यत् स्थानं प्रशस्यते ॥ ८३ ॥
तस्माच् श्मशाने पूजा च कर्तव्या भूतिलिप्सुभिः ।
गायत्री या पुरा प्रोक्ता ब्रह्मज्ञानस्वरूपिणी ॥ ८४ ॥
श्रीकृष्णश्च ऋषिस्तस्या गायत्री च्छन्द उच्यते ।
शिवशक्तिस्वरूपा हि देवता परिकीर्तिता ॥ ८५ ॥
अतः परं प्रवक्ष्यामि येनाशु फलमाप्नुयात् ।
ब्राह्मे मुहूर्ते उत्थाय ताम्बूलपूरिताननः ॥ ८६ ॥
खड्गहस्तः सुवाट्यां तु दद्याद् मांसान्वितं बलिम् ।
पूजयित्वा यथान्यायं तत आनीय सुन्दरीम् ॥ ८७ ॥
कामिनीं यौवनोन्मत्तां सुवेशां चारुहासिनीम् ।
कुलजां युवतीं वीक्ष्य नमस्कुर्यात् समाहितः ॥ ८८ ॥

यदि भाग्यवशेनैव कुलवृष्टिः प्रजायते ।
तदैव मानसीं पूजां तत्र तासां प्रकल्पयेत् ॥ ८९ ॥
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव विभूषणम् ।
स्त्रीमिलनं सदा कुर्यात् सुन्दरीभिर्विशेषतः ॥ ९० ॥
तासां प्रहारं निन्दा च कौटिल्यमप्रियं ततः ।
सर्वथा नैव कर्तव्यमन्यथा सिद्धिरोधकृत् ॥ ९१ ॥
तद्धस्तार्चितं भोज्यं देवतायै निवेदयेत् ।
प्रातःकृत्यं ततः कृत्वा स्नात्वा चिरं यथाविधि ॥ ९२ ॥
प्रयोगेण समागम्य कपालान्तःस्थले विशेत् ।
दिक्कालनियमो नास्ति स्थित्यादिनियमो न च ॥ ९३ ॥
न जपे कालनियमो नार्चनादिबलिष्वपि ।
स्वेच्छानियम उक्तोऽत्र महामन्त्रस्य साधने ॥ ९४ ॥
पूजयेद् विविधैः पुष्पैस्तुलसीवर्जितैः शुभैः ।
एवं संपूज्य विधिवत् सञ्जपेत् परमेश्वरीम् ॥ ९५ ॥
निशायां पूजयेद् देवीं जपेच्च प्रयतो नरः ।
सिन्दूरभूषणो नित्यं तथा चैव दिगम्बरः ॥ ९६ ॥
नारीं दिगम्बरीं कृत्वा विपरीतरतो भवेत् ।
अभिघातं चुम्बनं च कुर्यात् स्वाभीष्टसिद्धये ॥ ९७ ॥
निर्लज्जाकामबाणेन वृष्टं स्यात् मन्दिरं धनुः ।
तस्मिन् काले साधकेन्द्रो जपेत् संशुद्धमानसः ॥ ९८ ॥
संयोगं च स्वयं कुर्वञ्जपेत् सारस्वतप्रदाम् ।
तस्माद् भाव्या महेशानि कथिता देवदुर्लभा ॥ ९९ ॥
यस्याः प्रसादमासाद्य कलयामि जगत्त्रयम् ।
शिवशक्त्यात्मिका देवी अनिरुद्धसरस्वती ।
यां ज्ञात्वा मुक्तिमाप्नोति किमन्यत् कथयामि ते ॥ १०० ॥

१ 'अचिरं' क. पाठः ।

अत्रास्ति कुण्डलीशक्तिर्बीजरूपा निराकृतिः ।
परेयं कुण्डलीशक्तिश्चन्द्रमण्डलवर्तिनी ॥ १२४ ॥
इमं भेदं महेशानि यो जानाति स योगवित् ।
दलं कोशं तथा वर्णं तथैव चक्रदेवताः ॥ १२५ ॥
तथैव पूर्ववज्ज्ञेयं सर्वचक्रेष्वयं विधिः ।
चन्द्रतो ब्रह्मरन्ध्रान्तं चक्राण्यत्र चतुर्दश ॥ १२६ ॥
परापरेति विख्याता कुण्डली जीवसंज्ञका ।
सूर्यतो ब्रह्मरन्ध्रान्तं चक्राण्यत्र चतुर्दश ॥ १२७ ॥
परमेष्ठी समाख्याता सूर्यमण्डलवर्तिनी ।
नराकारस्वरूपेयं परज्योतिःस्वरूपिणी ॥ १२८ ॥
गोलकान्तर्ग(तो?ता)देवी ज्योतिर्बिन्दुसमाश्रिता ।
अत्रास्ति गोलकं चक्रं गोलोक इव दृश्यते ॥ १२९ ॥
इयं नारायणी काली तारा शून्यनिवासिनी ।
सुन्दरी रक्तकाली च महिषमर्दिनी तथा ॥ १३० ॥
मन(सः?सा)कल्पि(तो?ता)मूर्तिस्तेजोरूपाऽपरा च सा ।
परमात्मैव रामोऽयं महाविष्णुर्महाशिवः ॥ १३१ ॥
निरञ्जनस्वरूपोऽयं कृष्णरूपा च तारिणी ।
आत्मप्रकाशिनी नित्या नित्यानन्दस्वरूपिणी ॥ १३२ ॥
तस्या मन्त्राणि सुभगे मम मन्त्राणि यानि तु ।
पूर्वाम्नायविधानेन शीघ्रकामफलप्रदा ॥ १३३ ॥
नानापापहरा देवी वीरस्तद्गतमानसः ।
तत्त्वभावं समासाद्य फलतत्त्वं लभेन्नरः ॥ १३४ ॥
तत्र मन्त्राणि देवेशि सर्वार्थदायकानि च ।
यथा स्वयंभुवा देवाश्चत्वारः परिकीर्तिताः ॥ १३५ ॥

ज्ञातव्याश्च प्रसिद्धाश्च पारम्पर्योपदेशतः ।
पर्यायतोऽपि विज्ञेयाः श्रुतिवाङ्मयभेदतः ॥ १३६ ॥
तथा त्वयि मया प्रोक्ताः षडाम्नायाश्च सन्निधौ ।
स चाम्नायः श्रुतिर्ज्ञेयः श्रुतिश्च वेद उच्यते ॥ १३७ ॥
अतस्त्वयापि गिरिजे गोपनीयः स्वयोनिवत् ।
अत ऊर्ध्वं तु सुभगे रहस्यं परमं शृणु ॥ १३८ ॥
महामन्त्री यदा देवि साधको दैवयोगतः ।
तत्र कस्य जपं कुर्यात् पूजनादिकमेव च ॥ १३९ ॥
सर्वदेवनमस्कारं नित्यं कुर्यात् प्रयत्नतः ।
जपादिकं तु तस्यैव यत्र शङ्काभिजायते ॥ १४० ॥
गुरोर्गृहीतमन्त्रस्य प्रजपत्यपि साधकः ।
भ्रष्टाचारं प्रमादाद्वा आलस्याद्वापि सुन्दरि ॥ १४१ ॥
शङ्करस्य गृहीतस्य कथितं यत्र कुत्रचित् ।
हीनवीर्यमवाप्नोति मन्त्रादिश्च वरानने ॥ १४२ ॥
इत्यादिदोषनाशार्थं विधानं शृणु सांप्रतम् ।
प्रथमं जननं नाम जीवनं तु द्वितीयकम् ॥ १४३ ॥
तृतीयं ताडनं देवि चतुर्थं बोधनं तथा ।
पञ्चमं त्वभिषेकस्तु विमलीकरणं तथा ॥ १४४ ॥
आप्यायनं सप्तमं तु अष्टमं तर्पणं स्मृतम् ।
नवमं दीपनं प्रोक्तं दशमं गोपनं मतम् ॥ १४५ ॥
मन्त्राणां मातृकायन्त्रादुद्धारो जननं स्मृतम् ।
प्रणवान्तरितान् कृत्वा मन्त्रवर्णान् जपेत् सुधीः ॥ १४६ ॥
स्वरव्यञ्जनभेदेन जीवनं तदुदाहृतम् ।
मन्त्रवर्णान् समालिख्य ताडयेच्चन्दनाम्भसा ॥ १४७ ॥

प्रत्येकं वायुबीजेन ताडनं नाम(त:ऽतत्) शृणु ।
मन्त्रं विलिख्य विधिवत् प्रसूनैः करवीरजैः ॥ १४८ ॥
तन्मन्त्राक्षरसंख्यातैर्हन्याद्रेफेण बोधनम् ।
स्वतन्त्रोक्तविधानेन तदा मन्त्रार्णसंख्यया ॥ १४६ ॥
अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये ।
संचिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत् ॥ १५० ॥
मन्त्रे मलत्रयं देवि विमलीकरणात्मकम् ।
तारं व्योमाग्निमनुयुक् दण्डी ज्योतिर्मनुर्मतः ॥ १५१ ॥
कुशोदकेन जप्तेन प्रत्यर्णं प्रोक्षयेद् मनोः ।
तेन मन्त्रेण विधिवदेतदाप्यायनं मतम् ॥ १५२ ॥
मनुना वारिणा पात्रे तर्पणं तर्पणं भवेत् ।
तारमायारमायोगाद् मनोर्दीपनमुच्यते ॥ १५३ ॥
जप्यमानस्य मन्त्रस्य गोपनं चाप्रकाशनम् ।
एते च दश संस्काराः सर्वतन्त्रेषु गोपिताः ॥ १५४ ॥
एतान् कृत्वा जपेद् मन्त्रं सदा परहितं प्रिये ।
निर्गुणं यत् परं ब्रह्म ज्योतीरूपं निराकृति ॥ १५५ ॥
साकारं यदि जायेत सर्वदेहेषु देवता ।
रूपत्रयं सदा भूत्वा देहिनां देहभेदतः ॥ १५६ ॥
भगाकारं च यद् ब्रह्म लिङ्गाकारस्वरूपतः ।
केचित् सेवन्ति सुभगे लिङ्गाकारस्य सर्वदा ॥ १५७ ॥
भगाकारं च सेवन्ते विविधा ज्ञानिनः सदा ।
स्त्रीजातिरूपा सर्वत्र सर्वदेहेषु जानता ॥ १५८ ॥
(या:ऽसा) शक्तिरूपा विज्ञेया पुरुषः शिवरूपधृक् ।
तत्र तेषां विशेषार्थं नरदेहे वरानने ॥ १५६ ॥

शक्तिः शिवश्च विज्ञेयो मम संकेतमुत्तमम् ।
भगं कुण्डं च सुभगे स्रुवं लिङ्गं प्रकीर्तितम् ॥ १६० ॥
ऋतुरग्निश्च सुभगे गर्तमध्ये च क्षेपणम् ।
आज्यरूपं मतं शुक्रं मनो होता प्रकीर्तितः ॥ १६१ ॥
फलरूपं च तत्रैव नानासंसारकामनाः ।
विज्ञाय चैवं यो मन्त्री मनुश्च पीठब्रह्मवत् ॥ १६२ ॥
नित्यं च होमयेद् देवि तस्य रूपमनन्तकम् ।
यं यं कामादिकं देवि मनसा चिन्त्य कारयेत् ॥ १६३ ॥
न दोषगुणविज्ञेयो (यं यं?तं तं)काममवाप्नुयात् ।
यथोक्तदेवतायाश्च यथोक्तफलमश्नुते ॥ १६४ ॥
आयुर्लक्ष्मीं यशो देवि कीर्तिं च मोक्षमाप्नुयात् ।
गोपनीयं प्रयत्नेन न देयं यस्य कस्यचित् ॥ १६५ ॥
गोप्या गोप्या पुनर्गोप्या जननीजारगर्भवत् ।
इति ते कथितं सम्यक् संस्कारक्रममुत्तमम् ॥ १६६ ॥
इदानीं शाम्भवं चक्रं त्रिविधं शृणु पार्वति ।
येन विज्ञानमात्रेण ध्रुवं ज्योतिर्मयो भवेत् ॥ १६७ ॥
इडापिङ्गलयोर्मध्ये वर्णाश्च ज्योतीरूपिणः ।
ज्योतीरूपाणि चक्राणि ज्योतीरूपा च कुण्डली ॥ १६८ ॥
चन्द्रतः सूर्यपर्यन्तं चक्राण्यत्र चतुर्दश ।
तत्रास्ति कुण्डलीशक्तिर्बीजरूपा निराकृतिः ॥ १६९ ॥
पारेयं कुण्डलीशक्तिश्चन्द्रमण्डलवर्तिनी ।
इमं भेदं महेशानि यो जानाति स योगवित् ॥ १७० ॥
दलं कोषं तथा वर्णं तथैव च(न्द्र?क्र)देवताः ।
तथैव पूर्ववज्ज्ञेयः सर्वचक्रेष्वयं विधिः ॥ १७१ ॥

चन्द्रतो ब्रह्मरन्ध्रान्तं चक्राण्यत्र चतुर्दश ।
परापरेति विख्याता कुण्डली जीवसंज्ञका ॥ १७२ ॥
सूर्यतो ब्रह्मरन्ध्रान्तं चक्राण्यत्र चतुर्दश ।
परमेष्ठी समाख्याता सूर्यमण्डलवार्तिनी ॥ १७३ ॥
नराकारस्वरूपेयं परज्योतिःस्वरूपिणी ।
गोलकान्तर्गता देवी ज्योतिर्बिन्दुसमाश्रिता ॥ १७४ ॥
अत्रास्ति गोलकं चक्रं गोलोक इव दृश्यते ।
इयं नारायणी काली तारा स्याच्छून्यवासिनी ॥ १७५ ॥
सुन्दरी रक्तकालीयं भैरवी नादिनी तथा ।
मन(सः?ना)कल्पिता मूर्तिस्तेजोरूपा परापरा ॥ १७६ ॥
परमात्मैव रामोऽयं महाविष्णुर्महाशिवः ।
निरञ्जनस्वरूपोऽयं कृष्णरूपा च तारिणी ॥ १७७ ॥
आत्मप्रकाशिनी देवी नित्यानन्दस्वरूपिणी ।
इति ते कथितं देवि रहस्यं परमाद्भुतम् ॥ १७८ ॥
अस्मात् परतरं नास्ति तथ्यमध्ये सुरेश्वरि ।
इदानीं शृणु देवेशि परं ब्रह्मस्वरूपकम् ॥ १७९ ॥
प्राणस्तु परमेशानि आत्मज्ञानं शुचिस्मिते ।
यस्तु प्राणो महेशानि स जीवः परिकीर्तितः ॥ १८० ॥
प्रदीपकलिकाकारो हृदये विद्यते प्रिये ।
परं ब्रह्म महेशानि प्रदीपकलिकाकृति ॥ १८१ ॥
आत्मान्तरात्मा देवेशि सर्वेषां हृदि वर्तते ।
अन्तरात्मा परं ब्रह्म शरीरं व्याप्य तिष्ठति ॥ १८२ ॥
हृदये तेजो वरारोहे शक्तिं प्रकृतिरूपिणीम् ।
प्राणायामस्य काले तु दृष्ट्वाश्चर्यं वरानने ॥ १८३ ॥

यद् दृष्टं परमं गुह्यं तन्निशामय योगिनि ।
आत्मा ब्रह्मसमो भूत्वा यद् दृष्टं परमेश्वरि ॥ १८४ ॥
तदन्तरं महेशानि दृष्टमानन्दमद्भुतम् ।
मनो मया महेशानि कृत्वा तत्रैव पार्वति ॥ १८५ ॥
सुधार्णवे महेशानि मग्नो भूत्वा वरानने ।
लक्षवर्षं महेशानि निर्गतं परमेश्वरि ॥ १८६ ॥
प्राणायामक्षणे देवि लक्षवर्षं गतं मम ।
यद् दृष्टं परमेशानि निर्दिष्टं तच्छृणु प्रिये ॥ १८७ ॥
नातः परतरं किञ्चिद् विद्यते मम गोचरे ।
पर्य्यङ्कं परमेशानि आश्चर्यं परमाद्भुतम् ॥ १८८ ॥
पयःफेननिभा शय्या नानारत्नविभूषिता ।
या शय्या परमेशानि स एव श्रीसदाशिवः ॥ १८९ ॥
तत्रोपरि महेशानि सूक्ष्मां त्रिपुरसुन्दरीम् ।
जपायावकासिन्दूर-सदृशाकृतिरूपिणीम् ॥ १९० ॥
चतुर्भुजां त्रिनेत्रां च पञ्चबाणधनुर्धराम् ।
वरदाभयहस्तां च धारिणीं परमेश्वरीम् ॥ १९१ ॥
दृष्ट्वानन्दमयीं लीलां लक्षवर्षं गतं मम ।
यदा तु परमेशानि मम दृग्गोचरं गतः ॥ १९२ ॥
तदैव सहसा तत्र सूक्ष्मरूपत्वमागतः ।
ध्यानभङ्गे महेशानि तदैव मम सुन्दरि ॥ १९३ ॥
तत्रैव दृष्टं ब्रह्माण्डं ब्रह्माद्यास्त्रिदिवौकसः ।
शक्तिं विना महेशानि नास्ति किञ्चिद् मम प्रिये ॥ १९४ ॥
शक्तिर्हि ब्रह्मणो रूपं शक्तिरूपं वरानने ।
शक्तिं विना महेशानि न किञ्चिद् मम गोचरे ॥ १९५ ॥

एवं हि क्रमतो देवि मातृकान्यासमुत्तमम् ।
कृत्वा न्यासं महेशानि मातृका विश्वमोहिनी ॥ १९६ ॥
अतः परं महेशानि श्रीकण्ठन्यासमाचरेत् ।
श्रीकण्ठन्यासमात्रेण शिवोऽहं कमलानने ॥ १९७ ॥
श्रीकण्ठं परमेशानि त्रैलोक्ये चातिदुर्लभम् ।
पूर्वोक्तेन क्रमेणैव सर्वं कुर्यात् शुचिस्मिते ॥ १९८ ॥
सर्वं कुर्याद् महेशानि यत्नतः परमेश्वरि ।
ध्यायेत् शिवां वरारोहां हृत्प(त्री?त्रे)कमलेक्षणे ॥ १९९ ॥
हृत्पद्मं परमं स्थानं ब्रह्मस्थानं सुरार्चिते ।
जीवस्य स्थानमेतत्तु हृदयं परमं पदम् ॥ २०० ॥
हृत्पद्मं द्वादशदलं सहस्रादित्यवर्चसम् ।
तन्मध्ये भावयेद् देवं शिवं मृत्युञ्जयं प्रिये ॥ २०१ ॥
शुद्धस्फटिकसंकाशं पञ्चवक्त्रं महाप्रभम् ।
आजानुबाहुं देवेशि पञ्चवक्त्रं सुवीक्षणम् ॥ २०२ ॥
किरीटिनं कुण्डलिनं केयूराङ्गदशोभितम् ।
सततं हास्ययुक्तं च दन्तपङ्क्तिविराजितम् ॥ २०३ ॥
रुद्राक्षशोभितोरस्कं जटाशोभितमस्तकम् ।
व्याघ्रचर्मपरीधानं दशबाहुविराजितम् ॥ २०४ ॥
एवं ध्यात्वा महादेवं सदा मृत्युञ्जयं प्रिये ।
शक्तियुक्तं महादेवं सर्वाङ्गसर्वमोहनम् ॥ २०५ ॥
सर्वाङ्गचिन्तनं कृत्वा एकाङ्गं चिन्तयेत् ततः ।
एकाङ्गं तु परित्यज्य समाधिर्जायते ततः ॥ २०६ ॥
समाधिकाले देवेशि यत्तेज उपपद्यते ।
तन्निशामय देवेशि ज्ञानं परमदुर्लभम् ॥ २०७ ॥

सर्वाङ्गं तु परित्यज्य यत्तेज उपजायते ।
स एव परमेशानि शिवो मृत्युञ्जयः प्रिये ॥ २०८ ॥
प्रदीपकलिकाकारां प्रकृतिं विद्धि पार्वति ।
तत्र तेजसि देवेशि अन्तरात्मा सदा स्थितः ॥ २०९ ॥
अन्तरात्मा महेशानि कार्यकारणवर्जितः ।
भ्रमरे भ्रमरीं बद्ध्वा हृत्पद्मे परमेश्वरि ॥ २१० ॥
योगस्थस्य महेशानि लक्षवर्षं गतं मम ।



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (यन्त्रमन्त्रान्तरप्रयोग-तत्संस्कारादिविधिनिरूपणं) अष्टमः पटलः ॥ ८ ॥

अथ

## नवमः पटलः ।



श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि साधनान्तरमुत्तमम् ।
यत्कृते परमेशानि कृतार्थो नात्र संशयः ॥ १ ॥
प्रासादस्यान्तिके देवि कदलीस्तम्भनं भवेत् ।
तत्र वेदिं महेशानि वृक्षं तत्र प्ररोपयेत् ॥ २ ॥
रक्तासने चोपविश्य साधयेद् वीरसाधनम् ।
मातृकान्यासमाचर्य्य पूजयेत् परमेश्वरीम् ॥ ३ ॥
षोडशैरुपचारैस्तु पूजयेत् परदेवताम् ।
पाद्यं दद्याद् महादेव्यै गोमूत्रमिश्रितं पयः ॥ ४ ॥

ताम्रपात्रे मधु दत्त्वा दुग्धयुक्तं हविर्युतम् ।
घनीभूतं महेशानि दधि दद्यात् सशर्करम् ॥ ५ ॥
आचमनीयं देवेशि कांस्येनैव प्रदापयेत् ।
नैवेद्यं परमं दद्यात् सुस्वादु सुमनोहरम् ॥ ६ ॥
मधुयुक्तं नारिकेलं तक्रं च शर्करान्वितम् ।
दत्त्वा देव्यै महेशानि जीवन्मुक्तो भवेद् ध्रुवम् ॥ ७ ॥
अन्नं दद्याद् महेशानि सामिषं परमं शुभे ।
सप्ताहं व्याप्य तत्रैव जपेत् तद्गतमानसः ॥ ८ ॥
गते तु प्र(हरे?थमे)यामे द्वितीयप्रहरावधि ।
रुद्राक्षमालया देवि जपेद् वीतभयः सदा ॥ ९ ॥
सप्ताहाभ्यन्तरे देवि सिद्धो भवति मानवः ।
मातृकाक्षरसंयुक्तां विद्यां यद्वा न्यसेत् ततः ॥ १० ॥
मन्त्रध्यानपरो भूत्वा जपेद् मन्त्रमनन्यधीः ।
एकाक्षरं यदि भवेद् दिक्सहस्रं ततो जपेत् ॥ ११ ॥
द्व्यक्षरे त्वष्टसाहस्रं त्र्यक्षरे त्वयुतार्धकम् ।
ततः परं तु मन्त्राणां गजान्तकसहस्रकम् ॥ १२ ॥
निशायां जपमारभ्य उदयान्तं समाचरेत् ।
जपादौ च बलिं दत्त्वा पश्चादपि बलिं हरेत् ॥ १३ ॥
जपान्ते जपमध्ये वा देहि देहीति भाषते ।
तदापि च बलिं दद्याच् छागलं वापि माहिषम् ॥ १४ ॥
न दिक्षु वीक्षणं किञ्चिन् न वा बन्धुसमागमः ।
गजारिदुष्टसर्पाणां मृगानां दंष्ट्रिणां तथा ॥ १५ ॥
पक्षिकीटपिशाचानां यद्यन्मनसि संस्थितम् ।
तत्सर्वं स्वप्नवत् बु(द्ध्य?ध्वा)भयं सर्वत्र वर्जयेत् ॥ १६ ॥

समाप्य साधनं देवि दक्षिणां विभवावधि ।
गुरवे गुरुपुत्राय तत्पत्न्यै चापि दापयेत् ॥ १७ ॥
सम्यक् सिद्धस्य मन्त्रस्य नासाध्यं विद्यते क्वचित् ।
गुरुमन्त्रयतः पुंसः का कथा रुद्र एव सः ॥ १८ ॥
यतः सर्वत्र देवेशि गुरुपूजा गरीयसी ।
तदग्रे मन्त्रतन्त्राणां भाषणं नैव कारयेत् ॥ १९ ॥
पूजिते गुरुपादे वै सर्वदेव सुखी भवेत् ।
सर्वेषां तन्त्रमन्त्राणां पितासौ परमेश्वरः ॥ २० ॥
अन्यदेवसपर्या वा चान्यदेवस्य कीर्त(नात्)नम् ।
गुरुदेवं विना देवि तदग्रे नरके स्थितिः ॥ २१ ॥
शवारु(ढा?ढो)यदि भवेत् तद्विशेष इहोच्यते ।
शून्यागारे बिल्वमूले नदीतीरे चतुष्पथे ॥ २२ ॥
शवासन(?ग)तो मन्त्री चिन्तयेद् वीरसाधनम् ।
चण्डालं चाभिभूतं वा शीघ्रसिद्धिफलप्रदम् ॥ २३ ॥
आनीय स्थापयेदादौ न्यासजालं समाचरेत् ।
पीठमन्त्रं समालिख्य गन्धपुष्पादिनार्चयेत् ॥ २४ ॥
अभ्यर्च्य चासनं दत्त्वा आत्मरक्षां च कारयेत् ।
ततः शवास्ये विधिवद् देवताध्यायनं ततः ॥ २५ ॥
मन्त्रान्ते भुवनेशी स्याद् रेफान्तो मन्त्र ईरितः ।
महानीलक्रमं देवि सर्वसिद्धिप्रदायकम् ॥ २६ ॥
न कस्यचित् प्रयोक्तव्यं गोप्तव्यं प्रीतये मम ।
सर्वेषां जीवहीनानां जन्तूनां वीरसाधने ॥ २७ ॥
ब्राह्मणं गोमयं त्यक्त्वा साधयेत् वीरसाधनम् ।
महाशवाः प्रशस्ताः स्युः प्रधानं साधयेत् प्रिये ॥ २८ ॥

---

१ 'वद्र' ख. पाठः ।

श्मशाने हि पुरश्चर्या कथिता भुवि दुर्लभा ।
श्मशानसाधनं देवि मतं साधनमुत्तमम् ॥ २६ ॥
श्मशानस्थो यदि भवेत् जपन् मन्त्रमनन्यधीः ।
स सर्वसाधनं कृत्वा देवीलोके महीयते ॥ ३० ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे ( वीरसाधनविधानं ) नवमः पटलः ॥ ६ ॥

अथ

## दशमः पटलः ।



श्रीभैरव उवाच ।
इदानीं शृणु चार्वङ्गि येन सिद्धो भवेद् मनुः ।
शवमुण्डं समादाय मङ्गले वासरे निशि ॥ १ ॥
पञ्चगव्येन मिलितं चन्दनैकेन संयुतम् ।
अर्द्धहस्तमिते गर्ते हरिद्रारोचनायुते ॥ २ ॥
क्षिपेत् तत्र शवमुण्डं रजतेन समन्वितम् ।
मृत्तिकया पूरयित्वा सर्वं संस्कृत्य शोधयेत् ॥ ३ ॥
तत्रोपरि विशेद् देवि क्रमेण हि समन्वितः ।
सहस्रस्य प्रमाणेन जपं कुर्यात् समाहितः ॥ ४ ॥
समाप्ते तु जपे तत्र पूजयेत् परमेश्वरीम् ।
एवं त्रिदिनमध्ये तु सिद्धो भवति मानवः ॥ ५ ॥

इति ते कथितं भद्रे प्रयोगं सिद्धिदायकम् ।
अष्टम्यां सन्धिवेलायां अष्टोत्तरशतं जपेत् ॥ ६ ॥
सप्तदिनप्रयोगेन सिद्धिमाप्नोति मानवः ।
शनौ च सन्धिवेलायां गृहे लताभ्यर्कं यजेत् ॥ ७ ॥
जपेदेकाकी विजने लतासाधनतत्परः ।
एवं कृते महादेवि सिद्धिमाप्नोति साधकः ॥ ८ ॥
पूर्वोक्तकल्पमासाद्य पूजादिकं समाचरन् ।
केवलं कामदेवोऽसौ जप्त्वा चाष्टोत्तरं शतम् ॥ ९ ॥
सप्ताहाभ्यन्तरे देवि महदैश्वर्य्यमाप्नुयात् ।
विशेषं शृणु चार्वङ्गि तन्त्रेषु सर्वकामदम् ॥ १० ॥
येन विज्ञानमात्रेण सिद्धयोऽष्टौ भवन्ति हि ।
नासां मूले तु देवेशि उग्रां संपूज्य साधकः ॥ ११ ॥
महासिद्धिर्भवेद् देवि सत्यं सत्यं वरानने ।
कुलाकुललतागारे लिखित्वा मन्त्रमेव च ॥ १२ ॥
संपूज्य तत्र संस्कारं कृत्वा तस्यै निवेदयेत् ।
किञ्चित जप्तं मनुं नीत्वा देवतासाधनतत्परः ॥ १३ ॥
तां संपूज्य नमस्कृत्य स्वयं जप्त्वा सुसंयतः ।
प्रातः स्त्रीभ्यो बलिं दत्त्वा मन्त्रसिद्धिर्भवेत नृणाम् ॥ १४ ॥
धूमपुत्रसमायुक्ता अमावास्या शुभप्रदा ।
आर्द्र पुष्करयोगेन तस्यां वीरवरोत्तमः ॥ १५ ॥
विष्णुक्रान्तां समानीय निक्षिपेद् मृतभूमिषु ।
तत्र तां सचितां कृत्वा तद्दिने मृतहस्तके ॥ १६ ॥
तत्र प्रसार्य तां मन्मथचक्रभेदेन दापयेत् ।
तज्जलेनाभिषेकं च पूर्ववच्च शवोपरि ॥ १७ ॥

सचितां विजयां तस्य उदरे मुखवर्त्मना ।
चिप्त्वा तत्रैव तत् मत्स्यमञ्जनान्वितलोचनः ॥ १८ ॥
तिलकं पूर्वद्रव्येण तथाजस्रं मनुं जपेत् ।
स्वयमायाति भगवान् भैरवो भीमबाहुकः ॥ १९ ॥
गतभीतिस्ततो वीरस्तं विलोक्य जपेद् मनुम् ।
यदि भाग्यवशाद् देवि लगुडस्तत्र लभ्यते ॥ २० ॥
तदा स्वयं भैरवोऽसौ साक्षाद् वीरेश्वरो भवेत् ।
मत्स्यमानीय देवेशि निक्षिपेत् पितृकानने ॥ २१ ॥
तत्रासकृज् जपित्वा च देवतामेलनं भवेत् ।
निशायां मृतहट्टे च उन्मत्तानन्दभैरवः ॥ २२ ॥
दिग्वासा विमलो भस्मभूषणो मुक्तकेशकः ।
कृपाणी खड्गहस्तश्च जपेन् मातृकया यदि ॥ २३ ॥
तदा तस्य महादेवि सर्वसिद्धिः करे स्थिता ।
डाकिनीं योगिनीं वापि अन्यां वा गणसुन्दरीम् ॥ २४ ॥
तत्र चानीय संपूज्य सर्वसिद्धीश्वरो भवेत् ।
गुरुमानीय संस्थाप्य देववत् पूजयेद् विभुम् ॥ २५ ॥
वस्त्रालङ्कारहेमाद्यैः स्वयं संतोषयेद् गुरुम् ।
तत्सुतं तत्सुतां वापि तत्पत्नीं च विशेषतः ॥ २६ ॥
पूजयित्वा मनुं जप्त्वा सर्वसिद्धीश्वरो भवेत् ।
सहस्रारे गुरोः पादपद्मं ध्यात्वा प्रपूज्य च ॥ २७ ॥
केवलं देवभावेन जप्त्वा सिद्धीश्वरो भवेत् ।
गुरोरनुज्ञामात्रेण दुष्टमन्त्रोऽपि सिद्ध्यति ॥ २८ ॥
गुरुं विलङ्घ्य शास्त्रेऽस्मिन् नाधिकारः सुरैरपि ।
एषां च मन्त्रतन्त्राणां प्रयोगः क्रियते यदि ॥ २९ ॥

गुरुवक्त्रं विना देवि सिद्धिहानिः प्रजायते ।
एतत् तन्त्रं च मन्त्रं च शिष्येभ्योऽपि न दापयेत् ।
अन्यथा प्रेतराजस्य भवनं याति निश्चितम् ॥ ३० ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (साधनान्तरविधान-निरूपणं) दशमः पटलः ॥ १० ॥

अथ

## एकादशः पटलः ।



श्रीभैरव उवाच ।

विशेषान् शृणु वक्ष्यामि येन सिद्ध्येज् जगत्त्रयम् ।
यस्मात् परतरं नास्ति तन्त्रमध्ये न संशयः ॥ १ ॥
सर्वभाषामयी शुद्धा सर्वाम्नायैर्नमस्कृता ।
मायाबीजं समुद्धृत्य तारकं वह्निसंयुतम् ॥ २ ॥
मायाबिन्द्वीश्वरैर्युतं द्वितीयं बीजमुद्धृतम् ।
×रमां फट्कारकं चैव बीजपञ्चकमुत्तमम् ॥ ३ ॥
पञ्चरश्मिसमाक्रान्ताऽज्ञानेन्धनप्रदीपकम् ।
तस्योद्धारमहं वक्ष्ये शृणु सार्वज्ञकारणम् ॥ ४ ॥
प्रथमं प्रणवं दत्त्वा चतुर्थस्वरभूषितम् ।
रेफारूढं स्फुरद् दीप्तमिन्दुबिन्दुविराजितम् ॥ ५ ॥

---

१ 'बिन्दुस्वर' ख. पाठः । × त्रुटिरत्र दृश्यते ।

भगं चैव महेशानि चतुर्थस्वरसंयुतम् ।
(दाहारूढं रयं चैव शक्तियुक्तं तु योजयेत्) ॥ ६ ॥
नादविन्दुसमायुक्तं हूंकारं योजयेत् ततः ।
फट्कारं च ततो दद्यात् संपूर्णं सिद्धिदायकम् ॥ ७ ॥
लीलया वाक्प्रदा चेति तेन नीलसरस्वती ।
तारकत्वात् सदा तारा सुखमुक्तिप्रदायिनी ॥ ८ ॥
(उग्रापत्तारिणी यस्मादुग्रतारा प्रकीर्तिता ।)
वितारैकजटा चैषा महामुक्तिकरी सदा ॥ ९ ॥
तारास्त्ररहिता त्र्यर्णा महानीलसरस्वती ।
ताराद्या पञ्चवर्णेयं श्रीमन्नीलसरस्वती ॥ १० ॥
श्रीवीजाद्यापि देवेशि तदा श्रीःसर्वतोमुखी ।
एषैव हि महाविद्या मायाद्या सकलेष्टदा ॥ ११ ॥
वाग्भवाद्या यदा विद्या वाग्रूपा सर्ववाङ्मयी ।
एतान् क्रमगतान् प्राप्ता(न्)मत भेदान् जगन्मयी ॥ १२ ॥
एषा पञ्चाक्षरी विद्या पञ्चभूतप्रकाशिनी ।
वधूवीजं मध्यवीजं सर्ववीजान्तिमं भवेत् ॥ १३ ॥
फलिनी सर्वविद्यानां जयिनी जयकाङ्क्षिणाम् ।
विषक्षयकरी विद्या अमृतत्वप्रदायिनी ॥ १४ ॥
मन्त्रस्य ज्ञानमात्रेण विजयी भुवि जायते ।
लिखेत् खं कूर्चसंयुक्तं रौद्रं त्रैगुण्यमेव च ॥ १५ ॥
विधिविष्णुमहेशानां स्वशक्त्या क्रमयोगतः ।
एषा मता महाविद्या सर्वसिद्धिप्रदा शुभा ॥ १६ ॥
सर्वमन्त्रमयी शुद्धा सर्वतन्त्रेषु गोपिता ।
सिद्धिदा भजतामाशु संप्रदायविधानतः ॥ १७ ॥

ध्यानपूजादिकं सर्वं कुर्यात् साधकसत्तमः ।
अथातः संप्रवक्ष्यामि तारां भुवनतारिणीम् ॥ १८ ॥
यस्याः स्मरणमात्रेण भयमाशु विनाशयेत् ।
प्रणवं पूर्वमुद्धृत्य हृल्लेखाबीजमुद्धरेत् ॥ १९ ॥
गगनं शेषसंयुक्तं बिन्दुनादविभूषितम् ।
कूर्चबीजं च हृदयं तारायै च समुद्धरेत् ॥ २० ॥
महापद्मं समुद्धृत्य तारायै च समुद्धृतम् ।
सकलदुस्तरांस्तारे तारयेति तथा पुनः ॥ २१ ॥
तरयुग्मं वह्निजाया मन्त्रोऽयं सुरपादपः ।
गद्यपद्यमयी वाणी सभायां तस्य जायते ॥ २२ ॥
चतुर्लक्षजपेनास्याः सिद्धयोऽष्टौ भवन्ति हि ।
ध्यानपूजादिकं सर्वं पूर्ववत् समुपाचरेत् ॥ २३ ॥
प्रणवं पूर्वमुद्धृत्य तारे उत्तारयेति च ।
माया स्वाहेति मन्त्रोऽयं दशाक्षर उदाहृतः ॥ २४ ॥
स्मरणात् सर्वसत्त्वानां भयमाशु विनाशयेत् ।
ध्यानपूजादिकं सर्वं पूर्वमुक्तं सुरेश्वरि ॥ २५ ॥
विद्यारत्नं प्रवक्ष्यामि शृणु पर्वतनन्दिनि ।
वाग्भवं कुलदेवीं च तारकं वाग्भवं तथा ॥ २६ ॥
हृल्लेखां चास्त्रमन्त्रान्ते वह्निजायावधिर्मनुः ।
अष्टाक्षरो मनुः प्रोक्तो वेदमातुरनुत्तमः ॥ २७ ॥
पञ्चाङ्गं चास्य मन्त्रस्य पञ्चबीजैः प्रकल्पयेत् ।
अस्त्रं शेषाक्षरैर्न्यस्य कृतकृत्यो भवेद् नरः ॥ २८ ॥
ध्यानपूजादिकं सर्वं पूर्वमुक्तं महेश्वरि ।
कालिका सिद्धविद्या स्याद् महाकाली परा मता ॥ २९ ॥

तस्यास्तन्त्रे महाविद्या विज्ञेया साधकोत्तमैः ।
सर्ववेदमयी विद्या सर्वाम्नायैर्नमस्कृता ॥ ३० ॥
रक्षाकरी च संप्रोक्ता यदा सेव्या च साधकैः ।
प्रणवं पूर्वमुच्चार्य पद्मे-युग्मं तथैव च ॥ ३१ ॥
महापद्मे-पदं कुर्यात् पद्मावति-पदं ततः ।
माये स्वाहेति मन्त्रोऽयं प्रोक्तः सप्तदशाक्षरः ॥ ३२ ॥
पूजा पूर्ववदुद्दिष्टा चार्धरात्रे चतुष्पथे ।
जपमस्याश्चरेद् यस्तु शीघ्रं द्रुतकविर्भवेत् ॥ ३३ ॥
वीजमन्त्राः स्वतन्त्राः स्युस्तारिण्याः सर्वसिद्धिदाः ।
एते भेदा महोग्रायाः पुरुषार्थप्रवर्तकाः ॥ ३४ ॥
आयुःश्रीकान्तिकविता-विद्यासौभाग्यदायिनी ।
अन्ते निरामयं ब्रह्म जीवन्मुक्तिप्रदायिनी ॥ ३५ ॥
(शिववीजं महेशानि शक्तिवीजं ततः परम् ।
सर्वविन्दुसमायुक्तं वेदाद्यं तदधः क्रमात् ॥ ३६ ॥
माया स्त्रीं वर्मवीजान्ते हंसं जीवमुदीरितम् ।
एषा त्वष्टाक्षरी विद्या तव स्नेहात् प्रकाशिता ॥ ३७ ॥)
आज्ञासिद्धिमवाप्नोति त्रैलोक्यं वशमानयेत् ।
वशमायान्ति सहसा वेदविद्याश्चतुर्दश ॥ ३८ ॥
हंसतारा महाविद्या तव स्नेहात् प्रकाशिता ।
कवितामाहरेत् पुंसां धनार्थी धनमाप्नुयात् ॥ ३९ ॥
मोक्षार्थी लभते मोक्षं नात्र कार्या विचारणा ।
उग्रतारा महाविद्या कथ्यते मम पौरुषम् ॥ ४० ॥
पञ्चाक्षरी च या विद्या हंसाद्यन्ता महोदया ।
केवलं त्वत्प्रयत्नेन¹ तव स्नेहात् प्रकीर्तिता ॥ ४१ ॥

१ 'प्रसादेन' ख, पाठः ।

अस्याश्च जपपूजादीन् पश्चात्तारीवदाचरेत् ।
बीजयुक्ता महाविद्या लिताराद्या पृथक् पृथक् ॥ ४२ ॥
त्रैलोक्ये कथिता सिद्धिदायिन्युत्तमभूतिदा ।
षड्दीर्घमायया चैव षडङ्गं समुपाचरेत् ॥ ४३ ॥
पूजा पूर्ववदुद्दिष्टा प्रयोगान् वापि तत्समान् ।
वाङ्मायाकमलाबीजमीशो भृगुनिषेवितः ॥ ४४ ॥
चतुर्दशेन्दुसंयुक्तः पश्चाद् भृगुः सहेश्वरः ।
चतुर्दशविसर्गाढ्यो वद-द्वन्दं च वाक्-पदम् ॥ ४५ ॥
वादिनीति पदं पश्चात् क्लीं-पदत्रितयं ततः ।
नीलसरस्वति-पदं त्रिधावृत्तिश्च वाङ्मनोः ॥ ४६ ॥
काहि-शब्दद्वयं पश्चात् कलरीमश्विवल्लभा ।
चतुस्त्रिंशद्वर्णयुक्तो नीलसारस्वतो मनुः+ ॥ ४७ ॥
षाट्कोशिकोऽयं विज्ञेयः षड्भिर्मन्त्रैर्यतः कृतः ।
ऋषिच्छन्दोदेवतानां विभागं शृणु पार्वति ॥ ४८ ॥
गङ्गाप्रवाहो नामर्षिर्मत्स्यरूपी जनार्दनः ।
अत्यष्टिः कथिता छन्दो देवी नीलसरस्वती ॥ ४९ ॥
सर्ववागैश्वर्यमयी समस्ताभीष्टदायिनी ।
ऐंबीजं कीलकं ज्ञेयं ह्सौं शक्तिः समीरिता ॥ ५० ॥
नीलो वर्णश्च विज्ञेयस्त्वरितं कविताफलम् ।
मुद्रा तु प्रति(वासी?राशी)नां मुखमुद्रा समीरिता ॥ ५१ ॥
हृल्लेखया षडङ्गानि कुर्यात् षड्दीर्घयुक्तया ।
नीलांशुकां मणिमयीं व्याघ्रचर्मधरां शुभाम् ॥ ५२ ॥

---

+ प्रकाशम्—ऐंह्रींश्रींह्सौंस्हौः वद वद वाग्वादिनि क्लींक्लींक्लीं नीलसरस्वति ऐं ऐंऐं काहिकाहि कलरीं स्वाहा ॥ ३४

विद्यां ब्रह्मस्वरूपां च सर्वकामफलप्रदाम् ।
नमस्कुर्यात् प्रयत्नेन सर्वकामवरेश्वरीम् ॥ ५३ ॥
अथ वक्ष्ये महेशानि नीलस्य भावमग्रतः ।
पूर्वं देवासुरैर्युद्धे दानवा दितिजैः सह ॥ ५४ ॥
चक्रेण चक्रिणा छित्त्वा (छिन्नाः) कान्दिशीकाः प्रदुद्रुवुः ।
सम्भूय ते दुष्टदैत्याः समुद्रकुहरोदरे ॥ ५५ ॥
चक्रिणा च कृता पूर्वदेवानां परिभू(यते?तये) ।
देवरूपा भगवती सर्वमन्त्रमयी शुभा ॥ ५६ ॥
तत्रैव सर्वविप्राणां यज्ञकाण्डः प्रवर्तते ।
तेषु यज्ञेषु संभूतैर्हविर्भिर्बलिनः सुराः ॥ ५७ ॥
............... ............ ........ ।
सुरा ह्यस्मान् प्रबाधन्ते वयं निर्बलिनस्ततः ॥ ५८ ॥
इति तेषां वचः श्रुत्वा दीनानां दितिजन्मनाम् ।
हयग्रीवः सोमकश्च निर्वेदं भृशमापतुः ॥ ५९ ॥
तावुभौ भ्रातरौ दुष्टौ तुरङ्गग्रीव-सोमकौ ।
शब्दाकर्षणिकां देवीं समुद्दिश्यातपस्यताम् ॥ ६० ॥
तयोर्घोरतपःप्रीता शब्दाकर्षणिदेवता ।
प्रोवाच व्रियतामत्र वाञ्छितो वरवल्लभः ॥ ६१ ॥
ताभ्यामुक्ता भगवती वरप्रार्थनहेतवे ।
सर्वशब्दाकर्षणार्थं वरोऽस्मभ्यं प्रदीयताम् ॥ ६२ ॥
तथास्त्विति तया प्रोक्तौ दानवावतिदर्पितौ ।
ततस्तस्य प्रभावेण भूलोकं समुपस्थितौ ॥ ६३ ॥
स(र्वाः?र्वे)चाकर्षिताः शब्दा मन्त्ररूपा द्विजन्मनाम् ।
सा शब्दरूपिणी देवी शुभ्ररूपा सरस्वती ॥ ६४ ॥

मुखानि सर्वविप्राणां त्यक्त्वा दिव्यवपुर्धरा ।
आयाता दैत्यवरयोर्दुष्टगृहमुपागता ॥ ६५ ॥
क्रन्दन्तीं तां च विवशां नीत्वा पातालगोलके ।
हालाहलविषैः कृत्वा कुण्डं नीलजलप्रभैः ॥ ६६ ॥
तत्र तां विनिमज्यैव बद्ध्वा पन्नगरज्जुभिः ।
पर्वतैर्निविडं कृत्वा पुनर्देवजिगीषया ॥ ६७ ॥
तामासाद्य महादीप्तौ तुष्टुवतुः शुभावहम् ।
शब्दाकर्षणबाणेन दैत्यानां पृथिवीतले ॥ ६८ ॥
निःशब्दाश्चैव बाणेन वेदविस्मारिणो द्विजाः ।
मन्त्रविस्मरणेनैव यज्ञविद्या निरासिता ॥ ६९ ॥
तन्नाशतो हविर्भागवर्जिता बलहानितः ।
निर्वीयाश्च निरुद्योगास्ताभ्यां देवा निराकृताः ॥ ७० ॥
इत्थं विद्राव्य विबुधांस्तौ हयग्रीवसोमकौ ।
विष्णुचक्राङ्कितौ तौ च समुद्रान्तर्गृहे स्थितौ ॥ ७१ ॥
ततो विष्णुर्महामत्स्यरूपधारी सदा प्रभुः ।
यत्नं चकार देवेशि तदुद्धरणहेतवे ॥ ७२ ॥

सहस्रदंष्ट्रस्य झषस्य रूपं
पाठीननाम्नः परमोऽथ विष्णुः ।
रूपं गृहीत्वा भगवाननन्तो
विवेश देवोद्धरणाय यत्न(चाब्धि)म् ॥ ७३ ॥
वराहरूपेण यथाब्धिमग्नां
युगे युगे प्रोद्धृतवान् धरित्रीम् ।
तथैव मत्स्याकृतिरम्बुजाक्षो
विलोडयामास समुद्रपूरम् ॥ ७४ ॥

श्रीमत्स्यरूपस्य हरेः शरीरा-
दाविर्बभूवुश्च भुजाश्चतस्रः ।
खड्गं तथा चक्रकशार्ङ्गचापौ
कौमोदकी वाहुचतुष्टयेन ॥ ७५ ॥
मत्स्यस्वरूपस्य जनार्दनस्य
बभूव युद्धं शरदां सहस्रम् ।
ततश्च शब्दार्थविमर्शनार्थं
निःश्वासवातेन बलादगृह्णात् ॥ ७६ ॥
अप(ा)हृतौ तौ हरिचक्रकृत्तौ
कौमोदकीताडनमूर्च्छितौ च ।
महाहवे नाशमुपागतौ तौ
दैत्यौ हयग्रीवक-सोमकाख्यौ ॥ ७७ ॥
अथाम्बुधेर्गर्तपुरास्त्रवासे
निवेशितां तां विषकुण्डमध्ये ।
मत्स्यस्वरूपी भगवाननन्तो
निःश्वासमात्रैकशरीरशेषाम् ॥ ७८ ॥
आश्वासयामास स गीतवाक्यै-
र्हरिः स्मितं प्राह सरस्वतीं ताम् ।
त्रितारविद्यां प्रथमं जगाद
समस्तमन्त्रप्रकरस्य मूलम् ॥ ७६ ॥
तेनापि नो संविदमाप देवी
प्रासादमन्त्रं पुनरुज्जगाद ।
तेनापि नो संविदमाप देवी
कामेश्वरीं सोऽथ जगाद विष्णुः ॥ ८० ॥

एवं षडक्षरमनुं वचसां सवित्री-
मुत्थाप्य तां संविदमावभाषे ।
नीलासि जाता विषकुण्डमध्ये
सर्वाङ्गपूर्णा स्मितवक्त्रपद्मे ॥ ८१ ॥
यथा पुरा सर्वमहासुराणां
मुखान्तरे याहि च वीतयत्नम् ।
वेदान् समुच्चारय नाशयैतान्
इत्यादि वाणी हरिमाह देवी ॥ ८२ ॥
मत्स्यावतारेण सुरक्षिताहं
भयं भवेन्नैव फलं समाप्तम् ।
किंत्वस्य शोभाकृतिरन्यथा मे
नीलत्वमाप्नोति नितान्तचिन्ता ॥ ८३ ॥
निवेशिताहं विषकुण्डमध्ये
यथेति दूरीभवति क्षणेन ।
तथा कुरुष्व प्रथितरुपायै-
इत्युक्त ईशोऽपि जगाद लक्ष्मीम् ॥ ८४
मा त्वं शुचं याहि चिरात् सवित्रि
प्रागस्म्यभूवं शशिशुद्धवर्णा ।
उग्रेण हालाहलकर्षणेन
नीलत्वमाप्तासि कुतोऽत्र दोषः ॥ ८५ ॥
नील्यो विपण्यो भुवनस्य शोभां
पुष्णन्ति नीलः खलु देव एव ।
नीला मृडानी जगतां सवित्री
नीलं च कण्ठे पुरशासनस्य ॥ ८६ ॥

नीलो महेन्द्रः सुरचक्रवर्ती
नीला जगज्जीवनदाश्च मेघाः ।
नीलं नभः सर्वजनावकाशो
नीलः कलङ्कः शशिदीप्तिहेतुः ॥ ८७ ॥
नीलोऽप्यहं सत्त्वगुणाश्रयश्च
नीलस्य वर्णस्य कुतोऽस्ति दोषः ।
अशेषभूषामणिभूषिताङ्ग्यो
विनाञ्जनेनाक्षिनिवेशितेन ॥ ८८ ॥
न रूपवत्यो नच वा युवत्यो
विलासवत्यो नवयौवनाश्च ।
ख्यातिश्च ते नीलसरस्वतीति
ख्याता भवित्री भुवनत्रयेऽपि ॥ ८९ ॥
त्वदर्थमेव प्रयतं मयार्ये
षाट्कौषिकी बालमृगाक्षि नित्या ।
षडर्णयोगेन हि जीवितासि
विनष्टचेष्टा विषकुण्डमध्ये ॥ ९० ॥
इत्थं समाश्व(ा)स्य वचोभिराद्यां
प्रणम्य चादाय सरस्वतीं ताम् ।
प्रवर्तयामास मुखे द्विजानां
पुनः सुराणां सुखहव्यल(ब्धौ?ब्ध्यै) ॥ ९१ ॥
ततः प्रभृत्येव जगत्प्रतीता
मोक्षप्रदा नीलसरस्वतीति ।
(...................... ..
.........................) ॥ ९२ ॥

अस्या गुप्तं महामन्त्रं सर्वकामफलप्रदम् ।
यस्य स्मरणमात्रेण विजयी भुवि जायते ॥ ६३ ॥
शृणु वक्ष्यामि देवेशि उपायं साधने प्रिये ।
येन देवेशि भद्रं ते भविष्यति सुनिश्चितम् ॥ ६४ ॥
मन्त्रं शृणु वरारोहे जपात् सार्वज्ञदायकम् ।
विष्णुशक्तिर्महाशक्तिर्वह्निबीजं फडन्तकम् ॥ ६५ ॥
वर्णपञ्चकमेतत् तु सार्वज्ञकारणं महत् ।
यदाक्षमालया देवि दिक्सहस्रं जपेद् मनुम् ॥ ६६ ॥
आज्ञासिद्धिमवाप्नोति नात्र कार्या विचारणा ।
षण्मासात् परतो देवि महाराजत्वमाप्नुयात् ॥ ६७ ॥
अनेन सदृशं ज्ञानमनेन सदृशं तपः ।
नास्ति नास्ति महामाये तन्त्रमध्ये सुरेश्वरि ॥ ६८ ॥
अनेन मन्त्रराजेन वश्यादिकं समाचरेत् ।
ततः सिद्धो भवेद् मर्त्यो नात्र चिन्ताविधिः स्मृतः ॥ ६९ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (मन्त्रोद्धारतत्प्रकारान्तर-नीलिम-निरूपणमेकादशः पटलः ॥ ११ ॥

अथ

## द्वादशः पटलः ।

श्रीभैरव उवाच ।

इदानीं शृणु वक्ष्यामि विद्योत्पत्तिं वरानने ।
महाकाली जगद्धात्री तेजोरूपा जगन्मयी ॥ १ ॥
ब्रह्मरूपा महादेवी सर्वकल्याणहेतुका ।
गोलोकादुपरि स्थानं मणिमुक्तादिशोभितम् ॥ २ ॥
चतुर्द्वारं चतुष्काण्डं चतुरस्रं मनोरमम् ।
चतुर्भित्तिसमाकीर्णं मुक्ताहा(रैरै)महोज्ज्वलम् ॥ ३ ॥
स्फटिकस्तम्भसंक्रान्तं नृत्यगीतादिसंयुतम् ।
निर्मुक्तं परमेशानि परमं नात्र संशयः ॥ ४ ॥
इति ते कथितं दिव्यं कैलासस्थानमुत्तमम् ।
गते जगति सर्वांशे प्रलये परमेऽनघे ॥ ५ ॥
ब्रह्मविष्णुशिवास्तत्र न्यवसंस्तत्र भैरवि ।
भीमनामा महाराजा धार्मिकः परमः पुमान् ॥ ६ ॥
तस्य द्वारि महादेवि शिवाद्याः सकलेष्टदाः ।
तपसा च महादेवि प्रीतास्ते भद्रकेकये ॥ ७ ॥
प्रलये च गते देवि राजानं रक्षितुं शिवे ।
ब्रह्माद्याः परमेशानि उपायं चक्रिरे शिवे ॥ ८ ॥
अन्तस्तत्त्वं समीक्ष्यैव उपायं च वरानने ।
न्यवसंस्तत्र संप्राप्ता देवीरूपं मनोरमम् ॥ ९ ॥
विभागं परमेशानि वटपत्रोदरे स्थिताः ।
भगवत्या(:) पदं ध्यात्वा लक्षवर्षं ततोऽभवत् ॥ १० ॥

जाता काली परा नित्या प्रत्यक्षा तत्र भैरवि ।
प्राह देव महादेव भवद्भिः स्तूयतेऽत्र का ॥ ११ ॥
ततस्तां दृष्टिपथगां ज्ञात्वा ब्रह्मादयः सुराः ।
स्तवं चक्रुः परं तत्र भगवत्याः पदेऽभवन् ॥ १२ ॥
नमस्तुभ्यं महेशानि परमानन्दरूपिणि ।
अस्माकं प्राणरक्षार्थमागतासि जलोपरि ॥ १३ ॥
नमस्तुभ्यं नमस्तुभ्यं नमस्तुभ्यं नमो नमः ।
नमस्तेऽस्तु महारौद्रि कालरात्रि नमोऽस्तु ते ॥ १४ ॥
त्वां विना परमे रौद्रि प्रेतत्वं गतवान् भवः ।
रक्ष रक्ष परे विद्ये त्रैलोक्यभुवनोदरे ॥ १५ ॥
मधुकैटभसंहन्त्रि निसुम्भासुरमर्दिनि ।
देवैश्वर्यप्रदे देवि नमस्ते शङ्करप्रिये ॥ १६ ॥
चन्द्रसूर्यमये देवि परज्योतिःस्वरूपिणि ।
स्तवाभिभावभूता त्वं प्रसीद परमेश्वरि ॥ १७ ॥
इत्युक्त्वा प्रणिपत्यापि प्रणमन्तः पुनः पुनः ।
किरीटेनार्कवर्णेन कालीपदेऽस्पृशन् प्रिये ॥ १८ ॥
वरं वृणु महाभागा भगवत्योक्तमुत्तमम् ।
रक्षां कुरु महामाये नमस्ते शङ्करप्रिये ॥ १९ ॥
तथास्त्विति वचः कृत्वा सृष्ट्यादी(न्)कुरुतानघाः! ।

ब्रह्मोवाच ।

केन रूपेण देवेशि सृष्टिस्थित्यादिकं भवेत् ।
इति तस्य वचः श्रुत्वा भवानी भवमोहिनी ॥ २० ॥
कथयामास सर्वांस्तान् व(वदुस्ता?रदा सा)सुरान् वरान् ।
मम पादरजो नीत्वा उपादानात्मकं शिवम् ॥ २१ ॥

सृष्ट्यादीन् कुरुत आज्ञा येन सिद्धिर्भविष्यति ।
तत्पादप्रभवं नीत्वा रजो देवि शिवे शुभे ॥ २२ ॥
सृष्टिं कर्तुं ततो ब्रह्मा स्थितौ विष्णुः प्रवर्तकः ।
संहारे रुद्र एवासौ प्रावर्तयत सत्वरम् ॥ २३ ॥
सृष्टिराविर्बभूवाथ सर्वदेववरोत्तमैः ।
सनकाद्या सनन्दाद्या सन्ध्या चापि व्यजायत ॥ २४ ॥
प्रजाः ससर्ज देवेशः सर्वभूतमयीः शुभाः ।
स्थितिं विष्णुर्महाभागश्चकार जगतां विभुः ॥ २५ ॥
प्रसंहरति रुद्रश्च सृष्टेरेवं क्रमं शृणु ।
स्वर्गे देवा महादेवि इन्द्रो राजा तु तत्र वै ॥ २६ ॥
मर्त्यलोकं सनाथाढ्यं राजा च भगवान् मनुः ।
पातालं सर्वनागाढ्यं निर्ममे जगतां विभुः ॥ २७ ॥
तत्र राजा विराधाख्यः प्रजापालनतत्परः ।
ततो ब्रह्मा च विष्णुश्च रुद्रश्चैव सदाशिवः ॥ २८ ॥
स्वस्वकर्मणि घूर्णन्ते प्रभवन्ति गणेश्वरि ।
ततस्तु परमेशानि रौद्री रात्रिरुदीरिता ॥ २९ ॥
असुरास्तत्र देवेशि प्रदुद्रुवुर्महाभयाः ।
स्वर्गान्निराकृतास्तैस्तु भयानकभयार्दिताः ॥ ३० ॥
इन्द्रादयः सुरगणा ब्रह्मविष्णुशिवात्मिकाम् ।
आगच्छंस्तु महादेवीं स्वस्वकार्यार्थसाधकाः ॥ ३१ ॥
त्वमेव जगतां नाथस्त्वयि सर्वं प्रतिष्ठितम् ।
त्वमेव हव्यं(हेतो?होता)च भोज्यं भोक्ता च शाश्वतः ॥ ३२ ॥
वेद्यं वेदयिता चासि ध्याता ध्येयं च तत्परः ।
त्वं पितॄणामपि पिता देवानामपि देवता ॥ ३३ ॥

परतोऽपि परश्चापि विधाता वेधसामपि ।
परब्रह्मस्वरूपस्त्वं प्रसीद परमेश्वरि ॥ ३४ ॥
इति तेषां वचः श्रुत्वा देवी चादितिजन्मनाम् ।
प्राह देवाः ! परो धर्मः परात् परतरोऽपि च ॥ ३५ ॥
किं कारणं महाभागाः ! यत्नं कुरुत सादरम् ।
एवं श्रुत्वा ततो ब्रह्मा प्रोवाच वदतां वरः ॥ ३६ ॥
महेन्द्रस्य न चैश्वर्यं शाम्यते न च तेन सा ।
विष्णवादिको महान् भूतस्तेन शाम्येन्न संशयः ॥ ३७ ॥
ययौ ब्रह्मा महेन्द्रेण गोलोकं सहितो मुदा ।
नानाविधैर्महेशानि वाक्यैश्च परमेश्वरम् ॥ ३८ ॥
तुष्टाव परमानन्दं स्वकार्योद्धरणाय च ।
इति तस्य वचः श्रुत्वा ब्रह्मणः परमेष्ठिनः ॥ ३९ ॥
उवाच सादरं विष्णुर्न मया शक्यते विभो ।
ब्रह्मविष्णू महेशानि आगतौ मम गोचरे ॥ ४० ॥
स्तवैर्बहुविधैर्दिव्यैस्तुष्टुवतुः परं शुभे ।
मयोक्तं परमेशानि एतान् हन्तुं न शक्यते ॥ ४१ ॥
इति मद्वचनं श्रुत्वा ब्रह्मविष्णू समाहितौ ।
प्राञ्जलिं च ततो बद्ध्वा प्रतुष्टुवतुर्मां चिरम् ॥ ४२ ॥
ततः परं महादेवि कथितं सर्वमोहनम् ।
न शक्तिर्मम तत्रास्ति समर्था तद्विमर्दने ॥ ४३ ॥
अस्ति काली महातीर्थे कैलासे भवमोहिनी ।
परमे च शिवे देवी संस्थिता विश्वमोहिनी ॥ ४४ ॥
सैव काली महाविद्याऽज्ञानेन्धनप्रदीपनी ।
ततो ब्रह्मा च विष्णुश्च रुद्रोऽहं परमेश्वरि ॥ ४५ ॥

महाकालीदर्शनाय वयं तत्र गताः शुभे ।
तेजोरूपधरे देवि महानाथे हरप्रिये ॥ ४६ ॥
देवदानवगन्धर्वहिताय परमेश्वरि ।
प्रसीद सर्वकल्याणि नमस्ते शारदेऽनघे ॥ ४७ ॥
इति तेषां वचः श्रुत्वा महाकाली महाशिवा ।
देवानां प्रीतये देवि प्रत्यक्षरूपतां गता ॥ ४८ ॥

देवी उवाच ।

किं याचत सुराः सर्वे वरं वृणु तपोधनाः! ।
यत् (यत्)कामयमानाः स्थ तत् सर्व(शृणुता?वदता)मराः ॥ ४९ ॥

देवा ऊचुः ।

भीता महासुरैर्देवि यज्ञकाण्डं निवर्तितम् ।
तेषां वधाय देवि त्वं प्रसीद सर्वगोचरे ॥ ५० ॥
इति तेषां वचः श्रुत्वा देवी चादितिजन्मनाम् ।
प्रसन्ना सा महादेवी नीलरूपा वराङ्गना ॥ ५१ ॥
नीलसरस्वती ख्याता सृष्टसर्वविमोहिनी ।
तस्या उत्थाय सा देवी नीलवाणीति शब्दिता ॥ ५२ ॥
किमाज्ञापय देवि त्वं तत् करोमि प्रहेलया ।
तस्यास्तद्वचनं श्रुत्वा महाकालीति चिन्मयी ॥ ५३ ॥
उवाच सादरं देवि स्नेहगद्गदया गिरा ।
लीलया वाक्प्रदा चेति तस्मान्नीलसरस्वती ॥ ५४ ॥
देवि त्वं प्रथिता साध्वि नीलवाणीति(भाविनी ? तारिणी) ।
तस्याः प्रभावबृन्दैश्च व्याप्तं सर्वं जगत्त्रयम् ॥ ५५ ॥
गच्छ त्वं परमेशानि मत्स्वरूपा वरानने ।
देवकार्यहितार्थाय निर्मिता त्वं शुचिस्मिते ॥ ५६ ॥

इति तस्या वचः श्रुत्वा तारिणी विश्वमोहिनी ।
देवान् प्राह महाभागाः! गच्छत यत्र तेऽसुराः ॥ ५७ ॥
अहं तत्र गमिष्यामि सर्वथा सन्निधौ सुराः ।
इत्युक्त्वा सा महादेवी तारिणी कामचारिणी ॥ ५८ ॥
अन्तर्हिता महामाया मायारूपवती च सा ।
महामाया सदानन्दा सर्वदेवमयी शुभा ॥ ५९ ॥
ए(या?षा) च सर्वदेवानां गायत्री च मनोरमा ।
गायत्री सैव सावित्री सैव ब्रह्मस्वरूपिणी ॥ ६० ॥
यामासाद्य महात्मानो धर्मकामार्थमुक्तिषु ।
नासाद्यं मेनिरे किञ्चित् त्रिषु लोकेषु सुन्दरि ॥ ६१ ॥
कवित्वं परमैश्वर्यं महादेव्याः प्रसादतः ।
ईशत्वं गतवान् इन्द्रः विष्णुत्वं गतवान् हरिः ॥ ६२ ॥
शिवत्वं गतवान् रुद्रः सर्वैश्वर्ययुतो महान् ।
इति तद्वचनं श्रुत्वा देवाः सर्वैर्नमस्कृताः ॥ ६३ ॥
किरीटेनार्कवर्णेन स्पृशन्तस्तत्पदाम्बुजम् ।
नमस्कृत्य नमस्कृत्य पुनर्नत्वा महेश्वरीम् । ६४ ॥
सर्वं कार्यं महादेवि न किञ्चिदवशिष्यते ।
संस्मृता संस्मृता देवि हिंसेथाः परमापदः ॥ ६५ ॥
इति नत्वा महादेवीं सर्वकामवरेश्वरीम् ।
आगतास्ते पुनस्तत्र स्थितिर्यत्र शिवे (नघे? नगे) ॥ ६६ ॥
पञ्चवर्षं गतं तत्र देवानां दिव्यजन्मनाम् ।
भ्रष्टराज्याः परातङ्का मर्त्या इव नगोपरि ॥ ६७ ॥
इन्द्रादयः सुरगणाः पुनर्देवीं समस्मरन् ।
गताः सर्वे नगं शुद्धं यत्रास्ते सुन्दरी शिवा ॥ ६८ ॥

आसनं स्वागतं पाद्यमर्घ्यमाचमनीयकम् ।
मधुपर्काचमस्नान-वसनाभरणानि च ॥ ६९ ॥
गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं शिवे ।
षोडशैरुपचारैश्च देवीं नीलसरस्वतीम् ॥ ७० ॥
पूजयित्वा वलिं दत्त्वा शिवायै विविधैः शुभैः ।
जपं चकार देवेशि देववृन्दः सुरोत्तमः ॥ ७१ ॥
महामन्त्रं पूर्वमुक्तं लक्षं जप्त्वा महेश्वरि ।
अयुतं चाजुहोदज्यैः पद्मपुष्पैर्मनोरमैः ॥ ७२ ॥
होमं चक्रुस्तिलयुक्तैः शर्करासहितैरपि ।
एवं हुत्वा महादेवि दशांशेनाभिषेचनम् ॥ ७३ ॥
दशांशैस्तर्पणं देवि कृतं सर्वैर्महेश्वरि ।
समाप्ते च ततो देवीं पूजयित्वा महानिशि ॥ ७४ ॥
वलिं दत्त्वा महादेव्यै सुराहाराः सुरास्तथा ।
एवं नियममानेन कृतं कर्म मनोरमम् ॥ ७५ ॥
ततो भगवती देवी देवैः स्मृता महेश्वरि ।
सन्तुष्टा सा महादेवी नीलरूपा महोदरी ॥ ७६ ॥
देवाग्रे परमेशानि प्रत्यक्षत्वमुपागता ।
किं करोमि क्व गच्छामि ब्रूत देवाः! समाहृत्रे ॥ ७७ ॥

देवा ऊचुः ।

प्रणमा(मि?मो)महादेवि प्रसन्ना भव चेश्वरि ।
ततो भगवती देवी नीलरूपा मनोरमा ॥ ७८ ॥
दृष्ट्वा सुरसमूहान् सा तारिणी सर्वकामदा ।
स्वदेहतः पराः सृष्टा विद्या द्वादश ईरिताः ॥ ७९ ॥
काली चैव महादेवी महाविद्या तथैव च ।
षोडशी भुवनेशानी भैरवी च्छिन्नमस्तका ॥ ८० ॥

धूमावती च बगला मातङ्गी कमलात्मिका ।
एता विद्या महादेवि सिद्धिविद्याः प्रकीर्तिताः ॥ ८१ ॥
महादेव्याः सरस्वत्या देहोद्भूता वरानने ।
अन्याश्च मातरस्तस्या देहाज्जाता वरानने ॥ ८२ ॥
सर्वा देव्याः परानन्दे नृत्यन्ति चरणान्तिके ।
ततोऽसुरान् निहत्यैव पुनर्देवान् महेश्वरि ॥ ८३ ॥
संस्थापयामास तदा स्वस्वस्थानं गतास्तदा ।
इति प्रकारं देवेशि शृणु भैरवि मन्मुखात् ॥ ८४ ॥
तव स्नेहाद् वरारोहे प्रकाशमुपपादितम् ।
एतत्ते कथितं देवि विद्योत्पत्तिर्महेश्वरि ॥ ८५ ॥
सर्वतन्त्रेषु देवेशि गोपनीया सुरेश्वरि ।
तस्मात् परतरं नास्ति तन्त्रमध्ये महेश्वरि ॥ ८६ ॥
एषा ते कथिता विद्या सर्वसारोत्तमोत्तमा ।
इदानीं शृणु देवेशि सार्वज्ञकारणं मतम् ॥ ८७ ॥
रात्रौ प्रथमयामे तु मङ्गले वासरे शिवे ।
चतुर्हस्तप्रमाणां हि वेदिं कृत्वा मनोरमाम् ॥ ८८ ॥
सिन्दूरेण महेशानि यन्त्रं निर्माय साधकः ।
ताम्रस्योपरि संस्थाप्य वेष्टयेद् रक्तवाससा ॥ ८९ ॥
तिलपूर्णं घटं तत्र स्थापयेत् सुरवन्दिते ।
पूर्वमुक्तं मन्त्रबीजं तेनैव जपमाचरेत् ॥ ९० ॥
पूर्वास्यो हि जपं कुर्याद् विशेद् रक्तासने सुधीः ।
भूर्जे विलिख्य देवेशि साध्यनाम विदर्भितम् ॥ ९१ ॥
तदधः स्थापयेद् देवि विशेत् तदुपरि प्रिये ।
रक्तवस्त्रं परिधाय उष्णीषं लोहितं शिवे ॥ ९२ ॥

जपेत् पूर्वमुखो देवि पूजयेत् परमेश्वरीम् ।

सिन्दूरारुणविग्रहां करतले वामे च मुण्डं तथा
कर्णौ सव्ये शवेशं परिणमितजटाकेशपाशेन युक्ता[म्] ।
ध्यायेदट्टाट्टहासां [·········? ] रक्तधाराविशेषा
रक्ताख्या पूर्णमूला विदधतु (?)[सु]वरं कामरूपा वराङ्गी ।६३।

इति ध्यात्वा महादेवीं पूजयेत् परमेश्वरीम् ।
दशसाहस्रजाप्येन जपं कुर्याच्छुचिस्मिते ॥ ६४ ॥
होमयेत् तद्दशांशेन दशांशैस्तर्पणं चरेत् ।
तद्दशांशैर्महेशानि अभिषेचनमाचरेत् ॥ ६५ ॥
ततो देवि महाभागे जपहोमादिकं चरेत् ।
पञ्चदिनप्रयोगेण सिद्धो भवति साधकः ॥ ६६ ॥
इति ते कथितं देवि प्रयोगसारमुत्तमम् ।
सर्वसिद्धिप्रदं देवि सर्वापद्विनिवारकम् ॥ ६७ ॥
पुष्पवन्तौ यदि वृथा तदा निष्फलभाग् भवेत् ।
अस्मात् परतरं नास्ति सत्यं सुरगणार्चिते ॥ ६८ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (विद्योत्पत्ति-सृष्टिक्रम-पूजादिसाधन-निरूपणं) द्वादशः पटलः ॥ १२ ॥

अथ

## त्रयोदशः पटलः ।



श्रीभैरव उवाच ।

अथ वक्ष्ये महेशानि सावधानावधारय ।
महाकाल्याः परं मन्त्रं सर्वसारस्वतप्रदम् ॥ १ ॥

यामाहुराद्यां प्रकृतिं त्वराङ्गनां
प्रमातुराद्यां सकलां तुरीयाम् ।
परापराम्बां वरदां वरेण्यां
वीरेश्वरीं साधकसिद्धिदात्रीम् ॥ २ ॥

यामाद्यां प्रकृतिं प्राहुः कालीं कालस्वरूपिणीम् ।
तस्या मन्त्रं महामन्त्रं मन्त्रसारमिमं प्रिये ॥ ३ ॥
यज्ज्ञात्वा साधकाः सर्वे सिद्धिं प्रापुर्महर्षयः ।
शिवरूपा शवारूढा वरदा भयनाशिनी ॥ ४ ॥
सर्वकामप्रदा देवी सर्वविस्मयकारिणी ।
नात्र चित्तादिशुद्धिः स्याद् न चामित्रादिदूषणम् ॥ ५ ॥
न कालनियमस्तत्र महामन्त्रस्य साधने ।
न वारं नच नक्षत्रं नच तिथ्यादिदूषणम् ॥ ६ ॥
गुरुचिन्ता न चैवात्र महाकाल्याश्च साधने ।
मन्त्रं शृणु वरारोहे सर्वसारस्वतप्रदम् ॥ ७ ॥
महाशक्तिद्वयं देवि शब्दबीजद्वयं ततः ।
निजबीजत्रयं चैव दक्षिणे कालिके-पदम् ॥ ८ ॥
संहारक्रमयोगेन पूर्वबीजानि चोच्चरेत् ।
वर्तुलाद्यं महामन्त्रं वह्निप्रियान्तकं शिवे ॥ ९ ॥

त्रयोविंशत्यक्षरात्मा मनुः परमशोभनः ।
अनेन मन्त्रराजेन शिवोऽहं नात्र संशयः ॥ १० ॥
भैरवोऽस्य ऋषिः प्रोक्तो उष्णिक् छन्द उदाहृतम् ।
महाकाली देवता च लज्जाबीजं तु बीजकम् ॥ ११ ॥
हूँबीजं मन्त्रशक्तिः स्याद् विनियोगः प्रकीर्तितः ।
ध्यानं शृणु वरारोहे जपात् सिद्धिप्रदायकम् ।
यस्याभ्यासवशाद् देवि पशवो वीरतां गताः ॥ १२ ॥

मेघाङ्गीं विगताम्बरां शवशिवारूढां त्रिनेत्रां(परां)
कर्णालम्बितबालयुग्मशुभदां मुण्डस्रजा मालिनीम् ।
वामेऽधोर्ध्वकराम्बुजे नरशिरः खड्गं च सव्येतरे
दानाभीति विमुक्तकेशनिचयां वन्दे महासुन्दरीम् ॥ १३ ॥

इति ध्यानेन संपूज्य तोषयेत् परमेश्वरीम् ।
गायत्रीं शृणु चार्वङ्गि जपात सार्वज्ञदायिकाम् ॥ १४ ॥
कालिकायै-पदं चोक्त्वा विद्महे-पदमन्तरम् ।
श्मशानान्ते च वासिन्यै धीमहीति पदं ततः ॥ १५ ॥
तन्नो घोरा च देवेशि प्रचोदयादनन्तरम् ।
जप्ता विंशतिधा देवी सर्वसंपत्प्रदायिनी ॥ १६ ॥
जपेद् विंशतिसाहस्रं पुरश्चरणसिद्धये ।
होमयेत् तद्दशांशेन तद्दशांशेन तर्पयेत ॥ १७ ॥
दशांशेनाभिषेकं च भोजयेद् ब्राह्मणांस्ततः ।
तदन्ते महतीं पूजां कृत्वा सर्वं समाचरेत् ॥ १८ ॥
ततो विसर्जयेद् देवि घटं चैव जले क्षिपेत् ।
तत्प्रयोगमहं वक्ष्ये दृष्टादृष्टफलप्रदम् ॥ १९ ॥
साधिते च प्रयोगेऽस्मिन् मन्त्राः सिद्ध्यन्ति नान्यथा ।
गते तु(प्रहरे?प्रथमे)यामे तृतीयप्रहरावधि ॥ २० ॥

प्राङ्गने चाथवा भूमौ साधयेद् वीरसाधनम् ।
कदलीस्तम्भमारोप्य वेदिकां च महेश्वरि ॥ २१ ॥
घटं तत्र च संस्थाप्य सिन्दूरेण समन्वितम् ।
आम्रपल्लवमेतस्मिन् पानसं खादिरं तथा ॥ २२ ॥
अश्वत्थबदरीपत्रं क्षिपेत् कुम्भे गणेश्वरि ।
स्वर्णं रूप्यं तथा मुक्तां प्रवालं स्फटिकं तथा ॥ २३ ॥
एतत् सर्वं समुत्क्षिप्य साधयेद् वीरसाधनम् ।
संलिख्य मातृकायन्त्रं तत्रोपरि विशेन्मुदा ॥ २४ ॥
कम्बले संविशेन्मन्त्री उत्तराशामुखः स्थितः ।
नानाद्रव्यैः पूजयित्वा अन्नव्यञ्जनसंयुतम् ॥ २५ ॥
छागमांसं तथा सान्नं परमान्नं मनोरमम् ।
पायसं च तथा देवि महादेव्यै प्रदापयेत् ॥ २६ ॥
आनीय युवतीं रम्यां नानालङ्कारभूषिताम् ।
केशसंस्करणं कृत्वा ताम्बूलं च प्रदापयेत ॥ २७ ॥
स्तनद्वये रमाबीजं मुखे वाग्भवबीजकम् ।
भगपार्श्वद्वये देवि लिखेत् कामद्वयं शिवे ॥ २८ ॥
कुन्तलाकर्षणं कुर्यात् स्तनमर्दनपूर्वकम् ।
संक्षिप्य लिङ्गं तद्योनौ घातं कुर्याच्छुचिस्मिते ॥ २९ ॥
सहस्रस्य प्रमाणेन जपं कुर्याद् वरानने ।
सप्तदिनप्रयोगेण मन्त्रसिद्धिर्भवेत् प्रिये ॥ ३० ॥
अथवा प्रजपेत् मन्त्रं यावत्पत्रं न दृश्यते ।
पत्रे जाते महेशानि मन्त्रसिद्धिर्न संशयः ॥ ३१ ॥
इति ते कथितं देवि रहस्यं सर्वकामदम् ।
न प्रकाश्यं महेशानि न प्रकाश्यं कदाचन ॥ ३२ ॥

भवभीतिर्महेशानि नास्ति हे नगनन्दिनि ।
प्रयोगोऽयं महेशानि सर्वसिद्धिप्रदायकः ॥ ३३ ॥
मूलमन्त्रस्य माहात्म्यं कथितुं नैव शक्यते ।
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ॥ ३४ ॥
तथापि वक्तुं शक्नोमि नच वै परमेश्वरि ।
अस्ति गुह्यतमं स्थानं त्रैलोक्ये चातिदुर्लभम् ॥ ३५ ॥
कामरूपं महापीठं सर्वकामफलप्रदम् ।
एवं जप्तं महेशानि अनन्तफलदं भवेत् ॥ ३६ ॥
यदि भाग्यवशेनैव पीठं प्राप्नोति मानवः ।
तत्र जप्तं महेशानि अनन्तफलदं भवेत् ॥ ३७ ॥
सिद्धिर्यत्र महेशानि तत्र तिष्ठति भैरवी ।
तस्मात् परतरं स्थानं तन्त्रेऽस्मिन्नात्र संशयः ॥ ३८ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (महाकालीमन्त्र–तत्पुरश्चरणादिप्रयोग–वीरसाधननिरूपणं) त्रयोदशः पटलः ॥ १३ ॥

अथ

## चतुर्दशः पटलः ।



श्रीभैरव उवाच ।

अथ वक्ष्ये महादेवि कामाख्यामन्त्रमुत्तमम् ।
कामाख्यापञ्चमूर्तीनां रूपकं पञ्चभैरव(म्) ॥ १ ॥

कामस्थं काममध्यस्थं कामोदरपुटी(हृ?कृ)तम् ।
कामेन कामयेत् कामी कामं कामेन कामयेत् ॥ २ ॥
ज्येष्ठं तु व्यञ्जनं ब्रह्मा अपरः शक्र उच्यते ।
प्रथमं पुरतः कुर्यात् संसक्तं वसुधामयम् ॥ ३ ॥
प्रजापतिस्तथा शक्रबीजसंस्थाग्निसंयुतम् ।
चन्द्रार्धसहितं बीजं कामाख्यायाः प्रचक्षते ॥ ४ ॥
इदं धर्मप्रदं काममोक्षा(र्था?र्थ)संप्रदायकम् ।
इदं रहस्यं परममन्यतस्तु सुदुर्लभम् ॥ ५ ॥
स्तुत्यमिदं यः शृणुयाद् गुरुवक्त्राद् वरोत्तमम् ।
स कामान् निखिलान् प्राप्य परे लोके महीयते ॥ ६ ॥
कालीतन्त्रस्य मन्त्रस्य यथापूर्वं मयोदितम् ।
मण्डलं प्रतिपत्त्या तु पर्याय आलयस्य च ॥ ७ ॥
स एव प्रथमः कार्यः शिलायां पुष्पचन्दनैः ।
पात्रादीनां प्रतिष्ठार्थं तथैवात्रापि योजयेत् ॥ ८ ॥
तत्र ताः सकलाः ग्राह्या आसनादेश्च पूजनम् ।
प्रथमं भास्करायार्घ्यं प्रदद्याच्छ्वेतसर्षपैः ॥ ९ ॥
रक्तचन्दनपुष्पैश्च सगणाय महात्मने ।
आसनार्चनशेषे तु पीठोक्ताः सर्वदेवताः ॥ १० ॥
पीठनाम्ना तु संपूज्य मण्डलस्य तु मध्यतः ।
ध्यानस्वरूपं भिन्नं तु महाकाल्या वरानने ॥ ११ ॥
कामाख्यासर्वसाम्ये तु महामायास्तवोद्गतम् ।
योगिनीस्तु चतुःष्षष्टिं पूजयेत् परमेश्वरि ॥ १२ ॥
गुहं मनोभ(वो?वं) देवि महोच्छ्वासां तथा सखीम् ।
अनन्तरं पूजयेत्तु दिक्पालांश्च नवग्रहान् ॥ १३ ॥

रूपतस्तान् समुद्दिश्य पूजयेत् स गणाधिपे ।
पूर्वद्वारे गणपतिं प्रथमं पूजयेच्छिवे ॥ १४ ॥
नन्दिनं च हनूमन्तं पश्चिमद्वारि पूजयेत् ।
भृङ्गी चोत्तरतः पूज्यो महाकालस्तु दक्षिणे ॥ १५ ॥
एते मम द्वारपालास्तव द्वारे प्रपूजयेत् ।
पात्रामृतीकृतवि(धौ?धिं) कुर्याद्वै काममुद्रया ॥ १६ ॥
भूतापसरणं कुर्यात् पूर्वं तालत्रयेण तु ।
वामहस्ते दक्षिणेन पाणिना तालमाचरेत् ॥ १७ ॥
हूँहूँ फडिति मन्त्रेण वेतालादींश्च सर्पयेत् ।
अत्रोक्तेन स्वरूपेण प्राणायामान्तमाचरेत् ॥ १८ ॥
स्थापयेत् प्रथमं देवीं मूलमन्त्रेण पूजकः ।
मधुक्षीराज्यदधिभिर्गोमूत्रैर्गोमयैस्तथा ॥ १९ ॥
रत्नोदकैः शर्करादिगुडरत्नकुशोदकैः ।
सितसर्षपमुद्गाभ्यां तिलक्षीरैस्तथा यवैः ॥ २० ॥
रक्तचन्दनपुष्पैश्च दूर्वागोरोचनायुतैः ।
नवभिर्न्नितरेदर्घ्यं शिलाया योनिसन्निधौ ॥ २१ ॥
आसनं पाद्यमर्घ्यं च तत आचमनीयकम् ।
मधुपर्कं स्नानजलं वस्त्रं चन्दनभूषणे ॥ २२ ॥
पुष्पं धूपं च दीपं च नेत्राञ्जनमतः परम् ।
नैवेद्याचमनीये तु प्रदक्षिणानमस्कृती ॥ २३ ॥
एते षोडश निर्दिष्टा उपचारास्तु सुन्दरि ।
आवाहयेद् महादेवि गायत्र्या कामरूपया ॥ २४ ॥
तामेवं विद्धि वेतालगुह्यदैवतभैरवैः ।
कामाख्ये त्वमिहागच्छ यथावन्मम संनिधौ ॥ २५ ॥

पूजाकर्मणि सान्निध्यमिह कल्पय कामिनि ।
पूजावसाने च बलिं देवीप्रीत्यै निवेदयेत् ॥ २६ ॥
रुद्राक्षमालया जप्यमाधायैव समापयेत् ।
त्र्यक्षरैर्मूलमन्त्रस्य त्रिरावृत्तैः प्रपूजयेत् ॥ २७ ॥
महाकाल्याः षडङ्गानि स्वाङ्गानामन्तरे तथा ।
नीलमन्त्रस्य मन्त्रस्य कराङ्गन्यासयोश्च ये ॥ २८ ॥
स्वरैः प्रोक्ता महादेवि सार्धचन्द्रैः सबिन्दुकैः ।
मूलमन्त्राद्यक्षराभ्यां युगपद्भुवि योजयेत् ॥ २९ ॥
कनिष्ठादिक्रमेणैव त्वङ्गन्यासं समाचरेत् ।
अङ्गन्यासकरन्यासौ कृत्वा पश्चात्तु साधकः ॥ ३० ॥
हृच्छिरस्तु शिखा वर्म नेत्रास्योदरपृष्ठतः ।
बाह्वोः पार्श्वयोर्जङ्घयोः पादयोश्चापि विन्यसेत् ॥ ३१ ॥
अभयं वरदं हस्तमक्षमालां सुरेश्वरि ।
पूजयेच्च शिवं सूर्यं शिवाश्चन्द्रकलास्तथा ॥ ३२ ॥
रक्तपद्मं शरं चैव लोहितं ब्रह्मपुत्रकम् ।
मनोभवशिलां तत्र शक्तिहस्तां सुमध्यमाम् ॥ ३३ ॥
देव्याः प्रपूजयेद् भक्तः करवालं च पार्श्वतः ।
पीठाधिदेवतास्तत्र यजेत् कामेश्वरीं शुभाम् ॥ ३४ ॥
त्रिपुरां पूजयेन् मध्ये पीठे प्रत्यधिदेवताम् ।
शारदां च महोच्छ्वासां मध्य एवं प्रपूजयेत् ॥ ३५ ॥
चण्डेश्वरी महादेवी देव्या निर्माल्यधारिणी ।
योनिमुद्रा समाख्याता निर्माल्यस्य विसर्जने ॥ ३६ ॥
इदं द्रव्यं तु सिन्दूर अङ्गरागं तु कुङ्कुमैः ।
इति योऽत्र मया प्रोक्तो विशेषः परिपूजने ॥ ३७ ॥

एतैर्विशेषैः सहितं महादेव्याः प्रपूजने ।
सर्वं कल्पं समासाद्य कालिकां परिपूजयेत् ॥ ३८ ॥
मनोभवगुहामध्ये स याति परमां गतिम् ।
ब्रह्माणी चण्डिका रौद्री गौरीन्द्राणी तथैव च ॥ ३९ ॥
कौमारी वैष्णवी दुर्गा नारसिंही च कालिका ।
चामुण्डा शिवदूती च वाराही कार्तिकी तथा ॥ ४० ॥
माहेश्वरी शङ्करी च जयन्ती सर्वमङ्गला ।
काली (क)पालिनी मेधा शिवा शाकम्भरी तथा ॥ ४१ ॥
भीमा शान्ता भ्रामरी च रुद्राणी चाम्बिका तथा ।
क्षमा धात्री तथा स्वाहा स्वधाऽपर्णा महोदरी ॥ ४२ ॥
घोररूपा महाकाली भद्रकाली भयङ्करी ।
क्षेमङ्करी चोग्रचण्डा चण्डोग्रा चण्डनायिका ॥ ४३ ॥
चण्डा चण्डवती चण्डी महाप्रियङ्करी तथा ।
बलविकरणी देवी बलप्रमथनी तथा ॥ ४४ ॥
मनोन्मथनी चैव हि सर्वभूतस्य दमनी ।
उमा तारा महानिद्रा विजया च जया तथा ॥ ४५ ॥
पूर्वोक्ताः शैलपुत्र्याद्या योगिन्यष्टौ तथा क्रमात् ।
ताभिराभिश्च सहिताश्चतुष्षष्टिं च योगिनीः ॥ ४६ ॥
पूजयेद् मण्डलस्या(न्ताऽन्तः) सर्वकामार्थसिद्धये ।
नानाविधं तु नैवेद्यं पानं पायसमेव च ॥ ४७ ॥
मोदकापूपपिष्टादि देव्यै सम्यक् प्रदापयेत् ।
एवं तु पूजयेद् देवीं कालिकां कामदायिनीम् ॥ ४८ ॥
भक्तियुक्तो नरो भूत्वा सर्वान् स लभते प्रियान् ।
महोच्छ्वासा महादेवी महामाया तु सा स्मृता ॥ ४९ ॥

कालिकातन्त्रमन्त्रेण संपूज्य योनिमण्डले ।
तदेव मण्डलं चास्या ह्यङ्गन्यासं तदेव च ॥ ५० ॥
स एव पूजापर्यायस्तद्ध्यानं सैव देवता ।
मण्डलादि विसर्गान्तं महामायाः प्रपूजने ॥ ५१ ॥
यत् प्रोक्तं तेन तां देवीं महोच्छ्वासां तु मण्डले ।
स्नानपूर्व पूजयेत् तु मध्वाज्यादिभिरासवैः ॥ ५२ ॥
शृणुष्वेकमनाः कान्ते त्रिपुरायाः प्रपूजनम् ।
एतस्या मूलम(न्त्रेण?न्त्रं तु) पूर्वमुत्तरतन्त्रके ॥ ५३ ॥
वाग्भवं कामबीजं च डामरं चेति तत्त्रयम् ।
सर्वधर्मार्थकामादिसाधनं कुण्डलीयुतम् ॥ ५४ ॥
त्रीण्यस्याः पूजने दद्यात् स्वर्गा(?)ध्याता महेश्वरी ।
त्रिपुरेति ततः ख्याता कामाख्या कामरूपिणी ॥ ५५ ॥
तस्यास्तु स्नापनं यादृङ् महाकाल्याः प्रकीर्तितम् ।
तेनैव स्नापनं कुर्याद् मूलमन्त्रेण साधकः ॥ ५६ ॥
त्रिकोणमण्डलं चास्यास्त्रिपुरं च त्रिरेखकम् ।
मन्त्रस्तु त्र्यक्षरं ज्ञेयं तथा रूपत्रयं ततः ॥ ५७ ॥
त्रिविधा कुण्डलीशक्तिस्त्रिदेवानां च भूतये ।
सर्व त्रयं त्रयं यस्मात् तस्मात् सा त्रिपुरा मता ॥ ५८
उदीच्याद्यथ पू(र्णा?र्वा)न्ता रेखाः कार्यास्तु मण्डले ।
त्रिस्त्रिरेखास्तु कर्तव्याः स्युः पुनः पुष्पचन्दनैः ॥ ५९ ॥
ऐशान्याद्यथ नैर्ऋत्यां यन्त्रं कृत्वाङ्ग(सो)ल्लिखेत् ।
नैर्ऋत्यां चैव वायव्यां तत ऐशान्यगाः पुनः ॥ ६० ॥
एवं त्रिकोणं विलिखेद् मण्डलस्यान्तरे पुनः ।
ऐशान्यां या तु देवेशि सा शक्तिः परमेश्वरी ॥ ६१ ॥

एवं क्रमेण देवेशि वेतालादीन् प्रपूजयेत ।



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (कामाख्यामन्त्र–त्रिपुरामण्डलपूजादिनिरूपणं) चतुर्दशः पटलः ॥ १४ ॥

अथ

## पञ्चदशः पटलः ।



श्रीभैरव उवाच ।

अथ वक्ष्ये महेशानि साधनस्थानमुत्तमम् ।
यत्र जप्तं महेशानि हठात् सिद्धिप्रदायकम् ॥ १ ॥
दर्पणो देवि नाम्ना तु पर्वतः परमेश्वरि ।
कुवेरो यत्र वसति लोकपालैर्युतः शिवे ॥ २ ॥
रोहितो मध्यदेशे तु तस्मिन्नास्ते महेश्वरि ।
रक्तवर्णो महेशानि लोहाकृतिरिवापरः ॥ ३ ॥
पर्वतस्य महेशानि माहात्म्यात् स्वर्गतिं गतः ।
हिमालयेन सदृशः सर्वकर्मसुसाधकः ॥ ४ ॥
समुत्पन्नं तु लौहित्यं सर्वैर्देवगणैर्हरिः ।
सर्वतीर्थोदकैः सम्यक् स्नापयामास तं सुतम् ॥ ५ ॥
तस्य स्नानात् महेशानि पापदर्पस्य पाटनात् ।
तेनायं दर्पणो नाम सर्वैर्देवगणैः कृतः ॥ ६ ॥

तस्मिन् जते महेशानि तत्क्षणात् सिद्धिमाप्नुयात् ।
रोहितो नाम दैत्योऽसौ देवीमन्त्रं प्रजप्तवान् ॥ ७ ॥
तत्र देवीवरं प्राप्य तत्क्षणात् स्वर्ग(तं?तिं) गतः ।
अधिष्ठाने तु देव्यास्तु दर्पणाख्या तदाभवत् ॥ ८ ॥
दर्पणाद् दिशि पूर्वस्यामग्निज्वालामयो गिरिः ।
सर्पाकारशतज्वालादीर्घाकृतिः कृतः स्मृतः ॥ ९ ॥
यत्र तिष्ठति वै वह्निरूर्ध्वभागे महेश्वरि ।
सिन्दूरपुञ्जसंकाशे चारुदारुशिलातले ॥ १० ॥
तस्मिन् गिरिवरे वह्निर्नित्यमद्यापि शोभते ।
भैरवस्य हितार्थाय महाकाली महोज्ज्वला ॥ ११ ॥
तत्र तिष्ठति देवेशि रक्तवर्णा महोज्ज्वला ।
पूर्वमेव स्थितस्तत्र साक्षाद्वह्निर्महोज्ज्वलः ॥ १२ ॥
लौहित्यनिकटे कुण्डः सर्वसारस्वतप्रदः ।
तत्र स्नात्वा महेशानि साक्षाद् देवमयो भवेत् ॥ १३ ॥
पुरस्तादग्निस्थानस्य कुण्डकं वरुणाह्वयम् ।
तस्य तीरे गिरिः श्रेष्ठो नाम्ना कंशवरः पुरा । १४ ॥
वरुणस्तत्र वसति नित्यमेव जलाधिपः ।
तस्मिन् कंशवरे सम्यक् पूजयित्वा प्रचेतसम् ॥ १५ ॥
स्नात्वा च वारुणे कुण्डे वारुणं लोकमाप्नुयात् ।
आद्यं व्यञ्जनमेवात्र पञ्चमस्वरसंयुतम् ॥ १६ ॥
शशिचूडाशिखायुक्तं कौवेरं बीजमुच्यते ।
सप्तमो यः पकारस्य बिन्दुचन्द्रार्धसंयुतः ॥ १७ ॥
वह्निबीजमिति ख्यातस्तेन वह्निं प्रपूजयेत् ।
मकारपञ्चमः सोमबिन्दुभ्यां वारुणः स्मृतः ॥ १८ ॥

एभिर्मन्त्रैरिमान् देवान् नित्यमेव प्रपूजयेत् ।
वायुकूटो नाम गिरिः पूर्वस्यां वारुणाचलात् ॥ १९ ॥
खङ्गीशवायुबीजेन मण्डलेन समन्वितः ।
वायुलोकः स्थितस्तत्र यस्माद् निःसृत्य मारुतः ॥ २० ॥
ऊर्ध्वाधोभागमासाद्य नित्यं वहति भूतले ।
तत्र वायुं समभ्यर्च्य वायुलोकमवाप्नुयात् ॥ २१ ॥
पूर्वाद्वायुगिरेः शैलश्चाश्वकूट इति स्मृतः ।
त्रिकोणश्चाश्वसंकाशस्तदूर्ध्वे चन्द्रमण्डलम् ॥ २२ ॥
कूर्मं च बिन्दुसंयुक्तं मन्त्रं संजप्य सुन्दरि ।
चन्द्रबीजमिति ख्यातं विद्धि तं परमेश्वरि ॥ २३ ॥
अद्यापि तं महादेवि प्रतिदर्शे च चन्द्रमाः ।
प्रदक्षिणीकृत्य महादेवि याति निशापतिः ॥ २४ ॥
महाकाली घोररूपा तत्र तिष्ठति सुन्दरि ।
शिवेन सार्धं देवेशि क्रीडायुक्ता महानिशि ॥ २५ ॥
तत्र गत्वा मनुं जप्त्वा सिद्धो भवति साधकः ।
रहस्यं शृणु देवेशि सर्वाह्लादकरं परम् ॥ २६ ॥
तस्यैव पूर्वभागे तु सोमकुण्डाह्वयं सरः ।
तत्र स्नात्वा च पीत्वा च मुक्तिमाप्नोति मानवः ॥ २७ ॥
चन्द्रो देवि महेन्द्रस्तु रोहिणीसहितः प्रिये ।
भगवत्याः पदं तत्र अश्विनौ मुक्तिदायिनौ ॥ २८ ॥
कृते कार्ये महादेवि भगवत्या महोल्कया ।
रोहिण्या सहितो देवि चन्द्रः सर्वप्रकाशकः ॥ २९ ॥
अतिरेकं महाकाल्याः कृतवान् परमेश्वरि ।
दधिना परमेशानि दुग्धेनैव महेश्वरि ॥ ३० ॥

तेजोऽसीति घृतेनैव शर्करासहितेन च ।
फलोदकैर्महेशानि श्रीपुष्पसहितैस्तथा ॥ ३१ ॥
नानातीर्थोदकैश्चैव अभिषिञ्चेद् अनन्तरम् ।
तज्जलैः सहितं कुण्डं महापुण्यफलप्रदम् ॥ ३२ ॥
चन्द्रकुण्डस्य तीरे तु महाभीमः सिताकृतिः ।
प्रतिदर्शं पूजयित्वा लभेद् मुक्तिं महेश्वरि ॥ ३३ ॥
तस्यैव निकटे देवि भस्मकूटो महागिरिः ।
यत्र तिष्ठति भूतेशो महादेवो महामतिः ॥ ३४ ॥
दक्षिणे तस्य कूटस्य देवी पीयूषधारिणी ।
उर्वशी नाम विख्याता महेन्द्रो यत्र तिष्ठति ॥ ३५ ॥
महाकाल्या महेशानि चोर्वशी तत्र तिष्ठति ।
महाकाल्या महादेवि यत्र तिष्ठति भाविनी ॥ ३६ ॥
सा चैवामृतराशिस्तु कृत्वा किंचन किंचन ।
उपस्थापयते नित्यं कामाख्या-योनिमण्डले ॥ ३७ ॥
सुधाशिलान्तरस्था तु उर्वशी कुण्डवासिनी ।
उर्वशीकुण्डकूटस्य मध्ये कुण्डं सुधाकृतम् ॥ ३८ ॥
(द्वि?द्वा)त्रिंशद्धनुर्विस्तीर्णं पञ्चाशद्धनुरायतम् ।
तत्र स्नात्वा च पीत्वा च कामरूपो भवेद् नरः ॥ ३९ ॥
चन्द्रकुण्डस्य चैशान्यां मणिकूटो महागिरिः ।
मणिकर्णेशो महांस्तत्र सदा तिष्ठति सुन्दरि ॥ ४० ॥
सद्योजात इति ख्यातः कालिका तत्र तिष्ठति ।
जपं पूजां प्रशस्तां च साधयेत् साधनं परम् ॥ ४१ ॥
सद्योजातस्य मन्त्रेण पूजितव्यः सदाशिवः ।
मणिकर्णेश्वरं दृष्ट्वा मुक्तिमाप्नोति साधकः ॥ ४२ ॥

नदीषु मङ्गला नाम हिमपर्व्वतनिर्गता ।
पूर्व्वस्यां मणिकूटस्य सदा स्रवति शोभना ॥ ४३ ॥
मणिकूटं समारुह्य यः पश्यति शुभां नदीम् ।
स गङ्गास्नानजं पुण्यमवाप्य त्रिदिवं व्रजेत् ॥ ४४ ॥
मणिकूटाचलात् पूर्व्वे मत्स्यध्वजकुलाचलम् ।
निर्दग्धो यत्र मदनो हरनेत्राग्निना पुनः ॥ ४५ ॥
शरीरं प्राप्य तपसा समाराध्य वृषध्वजम् ।
तत्र मत्स्यस्वरूपेण कामदेवेन संस्थितम् ॥ ४६ ॥
अधित्यकायां पृथिवी वीक्ष्यमाणा ह्यनन्ततः ।
नदी तु शाश्वती नाम्ना तत्रास्ते दक्षिणस्रवा ॥ ४७ ॥
शिवः कामधरो नाम तस्मिन् शैले व्यवस्थितः ।
शाश्वत्यां विविधं स्नात्वा पीत्वा कामधराम्भसि ॥ ४८ ॥
विमुक्तपापः शुद्धात्मा शिवलोके महीयते ।
इति यः परमं तत्त्वं जानाति परमेश्वरि ॥ ४९ ॥
स विमुक्तो महापापात् सत्यं सत्यं भवेद् नरः ।
इदानीं शृणु चार्व्वङ्गि रहस्यं सर्व्वमोहनम् ॥ ५० ॥
गन्धमादनपूर्व्वस्यां सुकान्तो नाम पर्व्वतः ।
तत्प्रान्ते वासवं कुण्डं वासवामृतभोजनम् ॥ ५१ ॥
यत्र स्थित्वा दक्षिणस्यां पुरा शक्रः शचीपतिः ।
अमृतं श्रान्तदेहस्तु कामरूपान्तरे पपौ ॥ ५२ ॥
तत्पर्व्वते महादेवीं प्रपूज्य परमेश्वरि ।
पुरश्चरणमेकं तु कृत्वा निर्व्वाणमाप्नुयात् ॥ ५३ ॥
पूर्व्वस्यां तु सुकान्तस्य रक्षःकूटाह्व(को?यो) गिरिः ।
यत्रास्ते सततं देवो निर्ऋ(तो?तिः) राक्षसेश्वरः ॥ ५४ ॥

खड्गहस्तो महाकायो वामे चर्मधरस्तथा ।
जटाजूटसमायुक्तः (पाऽश्रां)शुः कृष्णाचलोपमः ॥ ५५ ॥
द्विभुजः कृष्णवर्णस्तु शवस्योपरि संस्थितः ।
रक्षःकूटं समारुह्य निर्ऋतिं राक्षसेश्वरम् ॥ ५६ ॥
यः पूजयेद् महादेवीं कालिकां कालरूपिणीम् ।
नास्ति तस्य च रक्षोभ्यो भयं सुरगणार्च्चिते ॥ ५७ ॥
राक्षसाश्च पिशाचाश्च वेतालाश्च (गऽवि)नायकाः ।
तां दृष्ट्वा च महाकालीं सर्वपापैः प्रमुच्यते ॥ ५८ ॥
रक्षःकूटात् पूर्वदिशि भैरवो नाम (साधकऽपर्वतः) ।
पाण्डुनाथ इति ख्यातो यथारूपेण संस्थितः ॥ ५९ ॥
तत्रैव पूजयेद् देवं पाण्डुनाथाह्वयं गिरिम् ।
वर्णेन घनवर्णेन गदापद्मधरः करे ॥ ६० ॥
दक्षिणे कमला देवी बाहुभ्यामपि बिभ्रतम् ।
चतुर्भुजं रक्तपद्मसंस्थितं मुकुटाकुलम् ॥ ६१ ॥
कुण्डले बिभ्रतं शुद्धे श्रीवत्सोरस्कमुत्तमम् ।
नमो नारायणायेति मूलबीजेन वै हरेः ॥ ६२ ॥
एवं संपूजयेद् देवं चतुर्वर्गस्य सिद्धये ।
पाण्डुनाथस्योत्तरस्यां ब्रह्मकूटाह्वयो गिरिः ॥ ६३ ॥
ब्रह्मणा निर्मितः पूर्वं वासार्थं स्वर्गवासिनाम् ।
आयामेन शतव्यामं विस्तारेण तदर्धकम् ॥ ६४ ॥
सर्वपापहरं पुण्यं देवसेकात् समागतम् ।
कमण्डलुसमुद्भूत ब्रह्मकुण्डामृतोदर ॥ ६५ ॥
हर मे सर्वपापानि पुण्यं शुद्धं च साधय ।
इति देवि प्रकारेण ब्रह्मकूटं महागिरिम् ॥ ६६ ॥

प्रदक्षिणेन संपूज्य देवीसायुज्यमाप्नुयात् ।
पाण्डुनाथात् पूर्वदिशि गिरिश्चित्रमहो हरिः ॥ ६७ ॥
सततं यत्र वसति विष्णुर्वाराहरूपधृक् ।
ततस्तु नीलकूटाख्यं कामाख्यानिलयं परम् ॥ ६८ ॥
तत्पूर्वभागे वसति ब्रह्मा ब्रह्मगिरिः पुनः ।
ब्रह्मशैलस्य पूर्वस्यां भूमिपीठो व्यवस्थितः ॥ ६९ ॥
चारुलिङ्गं शुभ्रवर्णं कामाख्यानाभिमण्डलम् ।
तत्रोग्रतारारूपेण रमते परमेश्वरी ॥ ७० ॥
तत्र तेनैव रूपेण पूजितव्या शुभात्मिका ।
रूपं शृणु वरारोहे तत्र ध्येया सदाशिवा ॥ ७१ ॥
कृष्णा लम्बोदरी दीर्घा विह्वला रक्तदन्तिका ।
चतुर्भुजा कृशाङ्गी च दक्षिणे कर्त्रिखर्परौ ॥ ७२ ॥
खड्गं चेन्दीवरं वामे शीर्षे चैव जटा पुनः ।
वामपादं शवस्योर्वोर्निधायोत्तमदक्षिणम् ॥ ७३ ॥
शवस्य हृदये न्यस्य साट्टहासं प्रकुर्वती ।
नागहारशिरोमाला भूतिदा कामदा परा ॥ ७४ ॥
त्रिकोणमण्डलं चास्याः हुंकारमध्यबीजकम् ।
द्वारेनाना योगिनीनां नामान्यासां तु तन्त्रके ॥ ७५ ॥
ज्ञेयानि नरशार्दूलैर्यत् प्रोक्तं चास्य गोचरे ।
उर्वश्यां विधिवत् स्नात्वा स्पृष्ट्वा पाण्डुशिलास्तथा ॥ ७६ ॥
नीलकूटं समारुह्य पुनर्योनौ न जायते ।
तत्र देवीं पूजयित्वा सर्वसिद्धीश्वरो भवेत् ॥ ७७ ॥
पुरन्दरपुरीयाते वाराङ्गनाकुलाधिके ।
सुधासंकीर्णतोऽमोघे पापं हर मनोहरे ॥ ७८ ॥

अमृतेनामृतं चाद्य देहि देवि समोर्वशि ।
पुरन्दरप्रिये देवि वाराङ्गनाकुलाधिके ॥ ७६ ॥
लौहित्यह्रदसंकीर्णे पापं हर ममोर्वशि ।
इत्येभिः स्तुतिमन्त्रैश्च स्नात्वा पुण्योर्वशीवने ॥ ८० ॥
सर्वपापविनिर्मुक्तो विष्णुलोके विराजते ।
उर्वशी द्विभुजा प्रोक्ता स्वर्णकङ्कणधारिणी ॥ ८१ ॥
शुक्लवस्त्रा गौरवर्णा पीनोन्नतपयोधरा ।
सर्वाङ्गसुन्दरी शुद्धा सर्वाभरणभूषिता ॥ ८२ ॥
उमामिन्द्रस्तु गादितं मन्त्रमस्याः प्रकीर्तितम् ।
गणेशः पूर्वदेशस्थः कामाख्यापर्वतस्य च ॥ ८३ ॥
तत्रैव चाग्निवेतालः स्थितः द्वारि मनोहरः ।
तयोः रूपं च मन्त्रं च यथोक्तं च महेश्वरि ॥ ८४ ॥
तदहं प्रतिवक्ष्यामि शृणुष्वैकमनाः प्रिये ।
प्रणवं परमेशानि हृदयं तदनन्तरम् ॥ ८५ ॥
हस्तिमुखायेति तदा निजबीजादिसंयुतः ।
मन्त्रं सि(द्धि?द्ध)गणेशस्य द्वारस्थस्य प्रकीर्तितम् ॥ ८६ ॥
रूपं तस्य प्रवक्ष्यामि गजवक्त्रं त्रिलोचनम् ।
लम्बोदरं चतुर्बाहुं व्यालयज्ञोपवीतिनम् ॥ ८७ ॥
शूर्पकर्णं बृहत्तुण्डमेकदन्तं पृथूदरम् ।
दक्षिणे करिदन्तं च उत्पलं च तथा परे ॥ ८८ ॥
लड्डुकं परशुं चैव वामतः परिकीर्तयेत् ।
बृहद्वक्षस्त्रिनयनं पीनस्कन्धाङ्घ्रिपाणिनम् ॥ ८९ ॥
युक्तं वर्हिकुरङ्गीभ्यां मध्यस्थमूषकान्वितम् ।
मन्त्रस्तु यादृशः प्रोक्तः पञ्चवक्त्रस्य पूजने ॥ ९० ॥

स एव मन्त्रो ग्राह्यस्तु तादृग्विधिनिषेवणम् ।
द्विभुजो पीनवदनो रक्तनेत्रो भयङ्करः ॥ ९१ ॥
छुरिका दक्षिणे पाणौ वामे रुधिरपात्रकम् ।
दंष्ट्राकरालवदनः कृशो धमनिसन्ततः ॥ ९२ ॥
जटां दीर्घा मूर्ध्नि बिभ्रद् घोररावयुतः परः ।
यः पूजयेत् तस्य पुनर्भूतादिभ्यो भयं नहि ॥ ९३ ॥
अथ वक्ष्ये महेशानि योगिनीतत्त्वमुत्तमम् ।
शैलपुत्रीप्रमुख्यानां मन्त्राण्यष्टाक्षराणि च ॥ ९४ ॥
वैष्णवीतन्त्रमन्त्राणि पूर्वप्रोक्तानि तानि च ।
शैलपुत्र्यास्तथा चाङ्गं मन्त्रं प्राक्प्रतिपादितम् ॥ ९५ ॥
रूपसदृशवर्णानां योगिनीनां विशेषतः ।
प्रत्यक्षरेण बीजेन दुर्गातन्त्रोक्तवर्त्मना ॥ ९६ ॥
नैजबीजेनैव पूज्या योगिन्यश्च महेश्वरि ।
कात्यायनीपादयुग्मं दुर्गातन्त्रेण पूजयेत् ॥ ९७ ॥
तदेव पूजनं रूपं तत्पूर्वं प्रतिपादितम् ।
प्रणवं पूर्वमुद्धृत्य छान्तवर्णं समादिशेत् ॥ ९८ ॥
वामगण्डेन संयुक्तं चन्द्रबिन्दुविभूषितम् ।
हंसशेषविसर्गान्तं मन्त्रं सर्वप्रियं शिवे ॥ ९९ ॥
कालरात्रिं पूजयित्वा सर्वैश्वर्ययुतो भवेत् ।
अनेनैव विधानेन पूजयेद् भुवनेश्वरीम् ॥ १०० ॥
महाशक्तिं समुद्धृत्य वाग्भवं तदनन्तरम् ।
पुनर्योनिं समासाद्य बीजत्रयमुदाहृतम् ॥ १०१ ॥
अनेन मन्त्रराजेन पूजयेद् भुवनेश्वरीम् ।
एताः सर्वास्तु योगिन्यः कामाख्यावत् फलप्रदाः ॥ १०२ ॥

विशेषो यत्र नैवोक्तो रूपे तन्त्रे च पूजने ।
नीलातन्त्रोक्तरूपेण तत्र पूजां समाचरेत् ॥ १०३ ॥
प्रत्येकं योगिनीं यस्तु पूजयेत् सुरवन्दिते ।
स सर्वयज्ञस्य फलं लभते नात्र संशयः ॥ १०४ ॥
नीलशैलस्य रूपस्य स्वरूपं प्रतिपादितम् ।
नाभिमण्डलपूर्वस्यां भस्मकूटस्य दक्षिणम् ॥ १०५ ॥
पूर्वस्यां कपटो नाम पर्वतो यः स्वरूपधृक् ।
तत्र याम्या शिला कृष्णा नीलाञ्जनसमप्रभा ॥ १०६ ॥
अधित्यकायां राजेन्द्रं व्यासपञ्चसुरान्तकम् ।
पूजयेत् तत्र शमनं पा(शां?शं)दण्डं सदैव यः ॥ १०७ ॥
धत्ते तु पाणिना नित्यं प्राणिदण्डस्य साधनम् ।
कृष्णवर्णं तु द्विभुजं किरीटमुकुटोज्ज्वलम् ॥ १०८ ॥
दधतं चासिपत्रं च वामपाणौ सदैव हि ।
कृष्णवर्णं स्थूलपादं बहिर्निःसृतदन्तकम् ॥ १०९ ॥
भयाभयप्रदं नित्यं नृणां महिषवाहनम् ।
पूजयेत् परया भक्त्या यमबीजेन सुन्दरि ॥ ११० ॥
उपान्त्यवर्गस्यान्ते यो वर्णो बिन्दिन्दुसंयुतः ।
यमबीजमिति ख्यातं यमस्य प्रीतिकारकम् ॥ १११ ॥
अनेनैव तु मन्त्रेण यमं हि पूज(येत्?यन्)शिवे ।
कपटाख्याचलवरे नापमृत्युं समाप्नुयात् ॥ ११२ ॥
पूर्वस्यां कपटाख्यस्य शैलोऽग्निप इति स्मृतः ।
यः पूर्वभाग्यैः प्राप्तो शृङ्गस्याग्नेय्यामवस्थितः ॥ ११३ ॥
अस्मिन् वसन्ति सततं ग्रहाश्चैव यथेच्छया ।
एतांश्च पूजयेद् यस्तु स नाप्नोत्यापदं क्वचित् ॥ ११४ ॥

अथ वक्ष्ये महेशानि सूर्यस्यापि च मन्त्रकम् ।
रूपं मन्त्रं च तन्त्रं च सूर्यस्यापि च संशृणु ॥ ११५ ॥
सप्तानामितरेषां तु मन्त्ररूपं शृणुष्व मे ।
रक्ताम्भोजधरः शूली शक्तिमांश्च गदाधरः ॥ ११६ ॥
चतुर्भुजो भानुरयं वरदो मेऽस्तु मङ्गलः ।
प्रणवं पूर्वमुद्धृत्य हान्तवर्णं ततो न्यसेत् ॥ ११७ ॥
चन्द्रेण पुटितं वीजं द्वितीयं वीजमुत्तमम् ।
तृतीयं शृणु चार्वङ्गि वह्निवीजं महात्मकम् ॥ ११८ ॥
अनेन मन्त्रराजेन सूर्यस्य पूजनं भवेत् ।
इदानीं कथयिष्यामि कज्जलाचलमुत्तमम् ॥ ११९ ॥
यत्र गौरी महादुर्गा शिवेन सहिता सती ।
सर्वे विद्याधराद्यास्तु सन्त्यत्र देवयोनयः ॥ १२० ॥
तं पर्वतं दिव्यरूपं समीक्ष्य च जपेद् दश ।
सहस्रान्तं मनुं प्रोक्तं सर्वसर्वस्वगोचरे ॥ १२१ ॥
थान्तवीजं समुद्धृत्य वामगण्डविभूषितम् ।
अर्धचन्द्रेण पुटितं वीजमाद्यं प्रियङ्करम् ॥ १२२ ॥
महाशक्तिं वरारोहे द्वितीयं बीजमुद्धृतम् ।
वह्निजायावधि मन्त्रं दुर्गाया वीजमुत्तमम् ॥ १२३ ॥
तेन वीजेन देवेशि कालिकां पूजयेत् शिवे ।
सहस्रस्य प्रमाणेन जपं कुर्यात् शुचिस्मिते ॥ १२४ ॥
तत्र जप्ते महेशानि मोक्षमाप्नोति साधकः ।
एकस्मिंश्च महेशानि पुरश्चरणके कृते ॥ १२५ ॥
पुरश्चरणलक्षाणां फलं तत्र भविष्यति ।
तस्य पूर्वे महेशानि शुभपर्वतके शुभे ॥ १२६ ॥

शच्या सार्धं पुरा रेमे यत्र शक्रः सुरेश्वरः ।
तत्पूर्वे सा महादेवि नदी कपिलसंज्ञिता ॥ १२७ ॥
तस्यां स्नात्वा जलं पीत्वा देवीलोके महीयते ।
कालिकानिलयात् पूर्वदक्षिणस्यां तथा दिशि ॥ १२८ ॥
विद्यते महदावृत्तं पवित्रं भूविलं महत् ।
पञ्चविंशतिमानेन योजनानां गणेश्वरि ॥ १२९ ॥
तस्मादायाति स्म नदी सर्वदेवनमस्कृता ।
को ब्रह्मा कीर्तितो देवैर्यस्मात् तस्य पिला स्मृता ॥ १३० ॥
गङ्गेव फलदा यस्मात् तस्मात् कपिलसंज्ञिता ।
स्नात्वा कपिलगङ्गायां पूर्वमन्यतरासु च ॥ १३१ ॥
नरः स्वर्गमवाप्यादौ देवीलोकं ततो व्रजेत् ।
अभीष्टदा नदीपूर्वभागे दमनिकाह्वया ॥ १३२ ॥
नदी महाहृष्टतोया पापानां शमनी तथा ।
ततो ब्रह्माह्वया चाभूद् अपरा सरिदुत्तमा ॥ १३३ ॥
तस्या नद्याः पूर्वभागे गङ्गावत् फलदायिनी ।
माघमासं तु सकलं नद्यां स्नात्वा महेश्वरि ॥ १३४ ॥
तथा दमनिकायां तु परं निर्वाणमाप्नुयात् ।



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (साधनस्थानान्तरनिरूपणं) पञ्चदशः पटलः ॥ १५ ॥

अथ

## षोडशः पटलः ।

श्रीभैरव उवाच ।

अथ वक्ष्ये महेशानि सारस्वतपदप्रदम् ।
आचारं परमेशानि शृणुष्वैकमना यतः ॥ १ ॥
यान्यवश्यं महेशानि कर्तव्यानीति निश्चितम् ।
साधवः क्षीणदोषाश्च स्वच्छन्दाः साधुवादकाः ॥ २ ॥
तेषामाचरणं यत्तु सदाचारः स उच्यते ।
समुद्दिष्टसदाचारान् गृह्णीयात् तद्गृहान्तवत् ॥ ३ ॥
कुर्याद् विधिनिषेधाभ्यां निषेधादिविधिं तथा ।
षट्कर्मसु नियुञ्जीत राजा विप्रान् समन्ततः ॥ ४ ॥
तथैव क्षत्रियादीनि स्वे स्वे कर्मणि योजयेत् ।
यः स्वधर्मं परित्यज्य परधर्मं समाचरेत् ॥ ५ ॥
स दण्ड्यः परमेशानि शतं दण्डेन दण्डयेत् ।
सांवत्सरेषु कृत्येषु विशिष्यैतान् समाचरेत् ॥ ६ ॥
अवश्यं पार्थिवः कुर्यात् तान् विशेषान् महेश्वरि ।
शरत्काले महाष्टम्यां दुर्गायाः परिपूजनम् ॥ ७ ॥
नीराजनं दशम्यां तु कुर्याद् वै बलवृद्धये ।
पौषे मास्यसिते पक्षे तृतीया या महेश्वरि ॥ ८ ॥
पुष्येण युक्ता देवेशि तत्र देवीं प्रपूज्य च ।
सर्वान् कामानवाप्नोति सर्वं भवति निश्चितम् ॥ ९ ॥

ज्यैष्ठे दशहरायां तु कालिकाया महेश्वरि ।
तथा नीलसरस्वत्याः पूजनं विधिवच्चरेत् ॥ १० ॥
अवश्यं राजभिः कार्यमन्यथा नश्यति ध्रुवम् ।
एभिः कृत्यैर्बलं राज्यं कोषश्चापि विवर्धते ॥ ११ ॥
अकृते च महादेवि दुर्भिक्षं मरकं भवेत् ।
जायन्ते चेतयः सर्वा विशिष्यैतान् समाचरेत् ॥ १२ ॥
शरत्काले महाष्टम्यां नीलायाः पूजने विधिः ।
पुरा प्रोक्तस्तु विधिना तेन कार्यं तु पूजनम् ॥ १३ ॥
विधिं नीराजनस्य त्वं शृणु हे नगनन्दिनि ।
कृतेन येन चास्माकं गजानामपि वर्धनम् ॥ १४ ॥
आश्विने शुक्लपक्षस्य तृतीयां स्वाति योगिनी ।
ऐशान्यां ससुरा सैव गृह्णीयात् स्नानमुत्तमम् ॥ १५ ॥
नीराजनं ततः कुर्यात् संप्राप्ते दिवसेऽष्टमे ।
नीराजनस्य कालस्तु पूर्वमुक्तो मया तव ॥ १६ ॥
विधानमात्रं देवेशि शृणुष्वैकमनाः प्रिये ।
एकं हयं महासत्त्वं सुमनोहरमेव वा ॥ १७ ॥
पूजयेत् सप्त दिवसान् गन्धपुष्पांशुकादिभिः ।
तृतीयादौ पूजयित्वा नयेत् तं यज्ञमण्डलम् ॥ १८ ॥
चेष्टा निरूपयंस्तस्य जानीयात् तु शुभाशुभम् ।
परराष्ट्राभिमर्दः स्याद् अश्वो यदि पलायते ॥ १९ ॥
म्रियते राजपुत्रस्तु यदि लेण्डानि मुञ्चति ।
नीयमानो न गच्छेच्चेद् महिषीमरणं तथा ॥ २० ॥
तथैव मुखनासाक्षिशब्दं कुर्याद् हयो यदि ।
यत्काष्ठाभिमुखं कुर्यात् तत्काष्ठायां जयेद् रिपून् ॥ २१ ॥

इति ते कथितं देवि राजत्वस्य प्रदायकम् ।
प्रयोगं मम सर्वस्वं जानीहि नगनन्दिनि ॥ २२ ॥
अन्यं शृणु वरारोहे येन सिद्ध्यति साधकः ।
ज्यैष्ठे मासि सिते पक्षे ज्येष्ठायुक्ता च सुन्दरि ॥ २३ ॥
पौर्णमासी महेशानि तस्यां स्नानं महाफलम् ।
चन्दनागुरुकक्कोलैर्दूर्वया श्वेतसर्षपैः ॥ २४ ॥
आमलक्या महेशानि हरिद्राचूर्णकेन च ।
तिलतैलैर्विष्णुतैलैरन्यैश्च गन्धसंयुतैः ॥ २५ ॥
नारायणेन तैलेन स्नपयेत् परमेश्वरीम् ।
नारिकेलोदकेनैव स्नपयेद् यदि कालिकाम् ॥ २६ ॥
लक्षवर्षसहस्रैश्च देवीलोके महीयते ।
दध्ना च परमेशानि स्नपयित्वा सुरेश्वरीम् ॥ २७ ॥
कल्पकोटिशतेनापि सायुज्याच्च न हीयते ।
दुग्धेन स्नपयेद् देवीं महाकालीं महोज्ज्वलाम् ॥ २८
तस्य लक्ष्मीर्विशेषेण स्थिरा स्याद् नात्र संशयः ।
घृतेन स्नपयेद् देवीं सर्वकामार्थसिद्धये ॥ २९ ॥
तथा शर्करया देवि फलमाप्नोति साधकः ।
मधुना स्नपयित्वा तु सर्वकामवरेश्वरीम् ॥ ३० ॥
कालिकां परमेशानि तथा चैव सरस्वतीम् ।
सर्वदुःखविनिर्मुक्तः स्वर्गे लोके महीयते ॥ ३१ ॥
सुगन्धिपुष्पतोयेन स्नपयेत् परमेश्वरीम् ।
तस्य पुण्यफलं देवि शृणुष्वैकमनाः प्रिये ॥ ३२ ॥
कल्पकोटिसहस्रैस्तु देवीसायुज्यमाप्नुयात् ।
भुङ्क्ते च विविधान् भोगान् यावदाभूतसंप्लवम् ॥ ३३ ॥

सचन्दनजलेनैव स्नपयित्वा सुरेश्वरीम् ।
यमलोकं परित्यज्य कैलासे वसतिर्भवेत् ॥ ३४ ॥
वैशाखे मासि देवेशि स्नपयेत् शीतलैर्जलैः ।
नारिकेलोदकं दिव्यं तस्यै दद्याद् मनोहरम् ॥ ३५ ॥
प्रातः संपूजयेद् देवीं सायाह्ने संप्रकाशयेत् ।
ज्यैष्ठे मासि सुरश्रेष्ठे मल्लिकां मालतीं तथा ॥ ३६ ॥
दापयेत् परमेशानि दध्ना च स्नानमाचरेत् ।
तथा कर्पूरसंमिश्रैस्तोयैश्च स्नपयेत् शिवाम् ॥ ३७ ॥
एवं क्रमेण देवेशीं स्नपयित्वा सुखं भवेत् ।
शुचौ मासि महादेव्यै शर्करासहितं दधि ॥ ३८ ॥
दद्याच्च परमेशानि स्नपयेत् श्वेतसर्षपैः ।
शर्करासहितांल्लाजान् महादेव्यै प्रदापयेत् ॥ ३९ ॥
एवं क्रमेण देवेशि पुरश्चर्याफलं लभेत् ।
श्रावणे परमेशानि घृतेन स्नपयेत् शिवाम् ॥ ४० ॥
तथा मसूरचूर्णेन स्नपयित्वा महेश्वरीम् ।
भुक्त्वा च विविधान् भोगान् दुर्गालोके महीयते ॥ ४१ ॥
पिष्टकैः सगुडैर्देवि तोषयेत् परमेश्वरीम् ।
नभस्ये परमेशानि स्नपयेत् सुरसुन्दरीम् ॥ ४२ ॥
हरिद्रामलकेनैव मथनेनैव सुन्दरि ।
क्षीरं दद्याद् महादेव्यै शर्करासहितं प्रिये ॥ ४३ ॥
छागमांसं पलान्नं च सूक्ष्मान्नसहितेन च ।
दद्याच्च पिष्टकं मौद्गं क्षीराज्यपरिभूषितम् ॥ ४४ ॥
एवं क्रमेण यो दद्याद् देवीलोकमवाप्नुयात् ।
इषे मासि प्रवृत्ते तु महादेवीं सरस्वतीम् ॥ ४५ ॥

स्नपयेत् च कषायेण कल्पामृतरसेन च ।
नारायणेन तैलेन विष्णुतैलेन वा पुनः ॥ ४६ ॥
अन्येन गन्धतैलेन स्नपयेद् भवमोहिनीम् ।
दद्याच्च परमं हृद्यं सन्देशं रसनासुखम् ॥ ४७ ॥
लड्डुकं परमं तस्यै दापयेत् सुरनायिके ।
नानाविधैश्च बलिभिः पूजयेत् शांकरीं शिवाम् ॥ ४८ ॥
एवं पूजां नरः कृत्वा वसेत् कल्पायुतं दिवि ।
कार्तिके मासि देवेशि स्नपयेदुष्णदुग्धकैः ॥ ४६ ॥
यक्षकर्दमकैर्वापि स्नपयेत् कार्तिके शिवे ।
अष्टद्रव्यं महादेवि गोधूमादिविकारजम् ॥ ५० ॥
क्षीरेण सहितं दद्याद् महादेव्यै प्रियङ्करम् ।
नारिकेलं तथा रम्भां गुवाकमिक्षुदण्डकम् ॥ ५१ ॥
जम्भीरं नागरङ्गं च दद्याद् देव्यै सुशोभनम् ।
कदुष्णं परमान्नं च पिष्टकेन च संयुतम् ॥ ५२ ॥
अष्टमत्स्यादिकं तस्यै दापयेद् यत्नतः शिवे ।
एवं कृत्वा नरः सद्यो जीवन्मुक्तो भविष्यति ॥ ५३ ॥
न तस्य पापपुण्यादि जायते नात्र संशयः ।
मार्गशीर्षे महादेवि मासश्रेष्ठे च सुन्दरीम् ॥ ५४ ॥
स्नपयेद् उष्णतोयैश्च वस्त्रपूतैः सुगन्धिभिः ।
कुङ्कुमादिभिरायुक्तैः पुष्पमाल्यमनोहरैः ॥ ५५ ॥
हरिद्रासहितैश्चारग्वधबीजैः सशर्करैः ।
स्नपयेत् परमेशानीं घृताक्तं चान्नमुत्तमम् ॥ ५६ ॥
व्यञ्जनं च घृताक्तं च सगुडं शुक्तिकायुतम् ।
वार्ताकीअष्टद्रव्येण तोषयेत् परमेश्वरीम् ॥ ५७ ॥

मूलकं परमं तस्यै दापयेद् यत्नतः शिवे ।
नैवेद्यैर्विविधैर्देवि चणकादिविभूषितैः ॥ ५८ ॥
कदलीसहितैर्देवि दद्यात् परमसुन्दरि ।
सूक्ष्मवस्त्रं महादेव्यै ख(ट्वां)दद्यात् सुशोभनाम् ॥ ५९ ॥
शय्यायुक्तां महेशानि दापयेत् सुरवन्दिते ।
एवं क्रमेण यो देवि मार्गे मासि प्रदापयेत् ॥ ६० ॥
तस्य पुण्यफलं देवि शृणु हे नगनन्दिनि ।
इह लोके सुखं भुक्त्वा महाराजत्वमाप्नुयात् ॥ ६१ ॥
इति ते कथितं देवि सर्वसिद्धिप्रदायकम् ।
पौषे मासि महादेवीं स्नपयेदुक्तया दिशा ॥ ६२ ॥
पयावकद्रव्यादि दापयेत् सुरमोहिनि ।
दिवा रात्रौ महादेव्यै दापयेद् भक्तमुत्तमम् ॥ ६३ ॥
सघृतं परमं हृद्यं ताम्बूलादियुतं प्रिये ।
नैवेद्यं परमं दद्यात् सयत्नैः साधकोत्तमैः ॥ ६४ ॥
माघे मासि महादेवि स्नपयेद् घृतपायसैः ।
गन्धयुक्तैर्जलैश्चापि स्नपयित्वा परां शिवाम् ॥ ६५ ॥
देवीसायुज्यमेवात्र प्राप्नुयाद् नात्र संशयः ।
चर्व्यं चोष्यं तथा लेह्यं पेयं दद्याद् मनोरमम् ॥ ६६ ॥
अन्नं पिष्टादिकं दद्याद् महादेव्यै प्रियङ्करम् ।
एवं क्रमेण देवेशीं तोषयेद् बहुयत्नतः ॥ ६७ ॥
इह लोके सुखं भुक्त्वा परत्र मोक्षमाप्नुयात् ।
फाल्गुने मासि देवेशि स्नपयेत् परमेश्वरीम् ॥ ६७ ॥
घृतेन पयसा वापि स्नपयेत् परमेश्वरीम् ।
नैवेद्यं परमं दिव्यं सुस्वादु सुमनोहरम् ॥ ६९ ॥

नानाद्रव्ययुतं भद्रे सर्वद्रव्यं सुशोभनम् ।
दद्याद् देव्यै महेशानि सुखमाप्नोति साधकः ॥ ७० ॥
चैत्रे मासि महेशानि दद्याच्च घृतपायसम् ।
दधि क्षीरं मधु द्रव्यं पायसं शर्करां तथा ॥ ७१ ॥
दद्याद् देव्यै महेशानि परं द्रव्यं सुशोभनम् ।
एवं क्रमेण देवेशि पूजयेद् यस्तु साधकः ॥ ७२ ॥
स मोक्षभाग् भवत्येव सत्यं सत्यं महेश्वरि ।
इति ते कथितं दिव्यं सर्वपापप्रमोचनम् ॥ ७३ ॥
प्रयोगं यः करोत्येवं स सुखी नात्र संशयः ।



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (प्रयोगान्तर-द्वादश-मासविधिनिरूपणं) षोडशः पटलः ॥ १६ ॥

अथ

## सप्तदशः पटलः ।



अथ वक्ष्ये महेशानि सार्वज्ञकारणं परम् ।
रात्रौ देवि वरारोहे प्रथमे प्रहरे गते ॥ १ ॥
मध्यरात्रौ विशेषेण सहस्रं यदि साधकः ।
प्रजपेत् परया भक्त्या मन्त्रमेनं समाहितः ॥ २ ॥
योनिं पूर्वं पुनर्योनिं बीजयुग्मात्मकं मनुम् ।
प्रजपेद् मध्यरात्रौ च मन्त्रपूतं जलं क्षिपेत् ॥ ३ ॥

षण्मासाभ्यन्तरे देवि सर्वज्ञत्वं समाप्नुयात् ।
इति सत्यं महादेवि संशयो नास्ति कश्चन ॥ ४ ॥
चन्द्रसूर्यौ यदि वृथा तदा निष्फलभाग् भवेत् ।
रहस्यं शृणु चार्वङ्गि महाकाल्याः प्रियङ्करम् ॥ ५ ॥
येन सिद्ध्यति देवेशि साधको वीतमत्सरः ।
कार्तिके मासि देवेशि अमावास्या च या तिथिः ॥ ६ ॥
तस्यां रात्रौ विशेषेण पूजयेत् कालिकां पराम् ।
प्रथमे प्रहरे देव्याः स्नानाय परमेश्वरीम् ॥ ७ ॥
समाराध्य महेशानि संकल्पस्तदनन्तरम् ।
तत्समीपे (मण्डपे तु) पद्मं निर्माय सुन्दरि ॥ ८ ॥
अथवा सर्वतोभद्रं निर्माय मण्डलं शुभम् ।
भद्रासने महादेवीं संस्थाप्य परमेश्वरि ॥ ९ ॥
स्नपयेद् दर्पणे शुभ्रे हरिद्रामलकेन च ।
तैलेन परमेशानि गन्धयुक्तेन सुन्दरि ॥ १० ॥
शीतलैः सुजलैर्देवीं कालिकां स्नपयेद् मुदा ।
एवमुक्तप्रकारैश्च नीलावत् पूजयेत् सुधीः ॥ ११ ॥
ध्यानं शृणु वरारोहे सारस्वतप्रदायकम् ।
येन ध्यानेन देवेशि साधयेत् सिद्धिमुत्तमाम् ॥ १२ ॥
मेघवर्णां स्मितमुखीं मुक्तकेशीं दिगम्बराम् ।
अट्टाट्टहासवदनां स्मेरा(रुणा?नन)सरोरुहाम् ॥ १३ ॥
त्रिनेत्रां वरदां नित्यां महादेवोपरि स्थिताम् ।
कर्णालम्बितबालाढ्यां मुण्डमालाविभूषिताम् ॥ १४ ॥
वामोर्ध्वे कर्त्रिकां दिव्यां तद(धे?धो) मुण्डधारिणीम् ।
अभयं वरदं हस्ते बिभ्रतीं दक्षिणेन च ॥ १५ ॥

त्रैलोक्यमोहिनीं देवीं मालां दिव्यां सुबिभ्रतीम् ।
एवं ध्यायेद् महाकालीं प्रसन्नवदनां शुभाम् ॥ १६ ॥
मण्डपं परमेशानि निर्माय विधिवत् शिवे ।
चतुरस्रं चतुर्द्वारं मुकुटाङ्कितमूर्द्धजाम् ॥ १७ ॥
परमे मण्डपे देवि पूजयेत् परमेश्वरीम् ।
विविधैः पूजयेद् द्रव्यैः पुष्पधूपासनादिभिः ॥ १८ ॥
नैवेद्यं परमं दद्याद् नानाद्रव्योपशोभितम् ।
पक्वान्नं परमं दिव्यं नानारससमन्वितम् ॥ १६ ॥
सन्देशं परमं कृत्यं(हृद्यं) सुस्वादु सुमनोहरम् ।
अपर्याप्तं महेशानि नाभिमात्रप्रमाणतः ॥ २० ॥
प्रहरे प्रहरे पूजां जपं चैव समाचरेत् ।
नानाविधैश्च बलिभिः पूजयेत् कालिकां शिवाम् ॥ २१ ॥
होमयेत् परमेशानि पायसाज्येन सुन्दरीम् ।
बिल्वपत्रैर्महेशानि होमयेच्च महेश्वरीम् ॥ २२ ॥
स्तवं पठेद् महेशानि (भ?भु)क्तिमुक्तिप्रदायकम् ।
ततो विसर्जयेद् धीमान् महादेवीं मनोहराम् ॥ २३ ॥
इति ते कथितं दिव्यं कालिकायाः प्रपूजनम् ।
यः करोति महादेवि स मोक्षं प्राप्नुयाद् ध्रुवम् ॥ २४ ॥
इह लोके सुखं देवि भवेद् नीलाविधौ प्रिये ।
अथ वक्ष्ये महादेवि कुण्डानां निर्णयं तथा ॥ २५ ॥
होमार्थं परमेशानि सरस्वत्याः शिवप्रिये ।
होमस्यैव विधिं वक्ष्ये कुण्डेन सहितं (विभो?शिवे) ॥ २६ ॥
आदौ भूमिं परीक्षेत वास्तुलक्षणतत्परः ।
शल्योद्धारं प्रकुर्वीत चाथवा परमेश्वरि ॥ २७ ॥

पौरुषेण प्रमाणेन खनेत् सुरगणार्च्चिते ।
वास्तुपूर्वदिशि महादेवि कुण्डं प्रकल्पयेत् ॥ २८ ॥
ऐशान्यां वा महेशानि कुण्डं कुर्याद् यथाविधि ।
सप्तहस्तं नव तथा पञ्च पञ्च विभेदतः ॥ २९ ॥
चतुरस्रं चतुर्द्वारं निश्छिद्रं तु प्रकल्पयेत् ।
संस्तरेद् दर्भकेणैव सूत्रेणैव प्रकल्पयेत् ॥ ३० ॥
एककुण्डमिते नान्यत् पञ्चहस्तगृहं भवेत ।
चतुरस्रे महेशानि सर्वकर्माणि साधयेत् ॥ ३१ ॥
प्रमाणं शृणु देवेशि येन सिद्धो भवेद् मनुः ।
कर्तुर्दक्षिणहस्तस्य मध्यमाङ्गुलिपर्वणः ॥ ३२ ॥
मध्यस्य दीर्घमानेन मानाङ्गुलिनिरूपणम् ।
अष्टाभिश्च यवै(र्देवि) एकाङ्गुलमिति स्मृतम् ॥ ३३ ॥
प्रत्येकसूत्रमास्फाल्य तन्मध्ये साधयेत् सुधीः ।
भागत्रयेण तन्मध्ये विधाय चैव पार्वति ॥ ३४ ॥
दिशोर्मत्स्ययुगं कुर्यात् (तस्यान्या?तन्मत्स्या)दनयोः क्वचित्
दक्षिणोत्तरगं सूत्रं यथानालं निपातयेत ॥ ३५ ॥
तत्सूत्राग्रेषु संस्थाप्य कोणेषु मकरांल्लिखेत् ।
कोणस्य मकरस्थानि दिक्षु सूत्राणि पातयेत् ॥ ३६ ॥
एवं कृते चतुष्कोष्ठं चतुरस्रं च जायते ।
एतत् कुण्डं महेशानि चतुरस्रं सुलक्षणम् ॥ ३७ ॥
कुण्डविस्तारमानं हि तादृशं परमेश्वरि ।
तन्मानं परमेशानि तादृग्रूपा च मेखला ॥ ३८ ॥
पञ्चात्रिमेखलं कुर्यात् तन्त्रवित् साधकोत्तमः ।
मेखलात्रितयं चैव महाहोमे महेश्वरि ॥ ३९ ॥

वेदाग्निनयनोत्सेधविस्तारा हस्तमात्रके ।
अन्तर्नवाङ्गुलोत्सेधा विस्तृता तु नवाङ्गुला ॥ ४० ॥
सर्वत्रैवंविधं चेत्रं कुण्डानामनुरूपतः ।
एकाङ्गुलं परित्यज्य कुण्डान्तर्मेखला भवेत् ॥ ४१ ॥
एकहस्ते तु कुण्डे वै ह्यन्यत् कुण्डे विवर्जयेत् ।
अर्द्धाङ्गुलप्रमाणे तु कुण्डं कुर्याच्च मन्त्रवित् ॥ ४२ ॥
सात्त्विकी मेखला पूर्वा द्वितीया राजसी तथा ।
तृतीया तामसी प्रोक्ता मेखलानां तु निर्णयः ॥ ४३ ॥
इति ते कथितं दिव्यं मेखलानिर्णयं तथा ।
अथ वक्ष्ये महेशानि योनिनिर्णयमुत्तमम् ॥ ४४ ॥
प्रथमे योनिं कुण्डे तु[1] मेखलान्तरपूर्वतः ।
कुर्याद् गजोष्ठवर्णं तु कुण्डवित् सर्वलक्षणम् ॥ ४५ ॥
योनिः षडङ्गुला प्रोक्ता चतुरङ्गुलविस्तृता ।
उन्नता ह्यङ्गुला प्रोक्ता कुण्डे हस्तमिते बुधैः ॥ ४६ ॥
नाभिं कुण्डोदरे[2] कुर्यात् सुधीरष्टदलाब्जवत् ।
तत्तत्कुण्डानुरूपां वा नाभिं तत्र विचक्षणः ॥ ४७ ॥
नेत्रवेदाङ्गुलोत्सेधविस्तारा नाभिरत्र वै ।
द्विहस्तादिषु कुण्डेषु योनिं संवर्धयेत् क्रमात् ॥ ४८ ॥
एकैकाङ्गुलिमानेन तथा नाभिं च वर्धयेत् ।
कुण्डस्थले बहिःस्थानं स्थलं विद्धि महेश्वरि ॥ ४९ ॥
चतुरस्रस्थलारब्धं नालमध्ये सरन्ध्रकम् ।
स्थूलमूला च सूक्ष्माग्रा उन्नतिः स्याद् मनोहरा ॥ ५० ॥
बहिःस्थले मेखलायाः स्थानमारभ्य[3] कारयेत् ।
योनिमध्ये बिलं कुर्यात् तद्बाह्ये ग्राहिसंज्ञकम् ॥ ५१ ॥

---

१ 'प्रथमे मेखले योनिं' ख. पाठः। २ 'कुण्डादधः' ख. पाठः। ३ 'बहिःस्थमेखलाबाह्यस्थानमा' ख. पाठः।

योन्यग्रं वर्धयेद् विद्वान् नाभिर्वृत्ताकृतिर्भवेत् ।
हस्तमात्रे सहस्रं तु द्विहस्ते चायुतं स्मृतम् ॥ ५२ ॥
चतुर्हस्ते लक्षमात्रं षट्करे दशलक्षकम् ।
दशहस्ते महेशानि कोटिहोमं समाचरेत् ॥ ५३ ॥
दशहस्तात् परं नास्ति तन्त्रेऽस्मिन् परमेश्वरि ।
खाताधिके भवेद् रोगी हीने धेनुधनक्षयः ॥ ५४ ॥
वक्रकुण्डे तु संतापो बन्धुहा हीनमेखले ।
मेखलारहिते शोकोऽभ्यधिके वित्तसंक्षयः ॥ ५५ ॥
भार्याविनाशकं कुण्डं योन्याः शून्यं महेश्वरि ।
अपत्यध्वंसनं कुण्डं यदि तत् कण्ठवर्जितम् ॥ ५६ ॥
उच्चाटः स्फुटिते छिद्रसंकुले वा मृतिर्भवेत् ।
तस्माद् हि परमेशानि ज्ञात्वा कुण्डं प्रसाधयेत् ॥ ५७ ॥
देवीप्रीतिकरं कुण्डं सर्वदेवनमस्कृतम् ।
मन्त्रसिद्धिकरं कुण्डं सर्वसारस्वतप्रदम् ॥ ५८ ॥
अथ वक्ष्ये महेशानि ह्यग्निकार्यं सुशोभनम् ।
यस्मिन् हुत्वा वरारोहे सर्वविद्यामयो भवेत् ॥ ५९ ॥
मण्डपस्योत्तरे भागे कुण्डान् कृत्वा यथोदितान् ।
नित्यनैमित्तिककाम्यान् संस्कारं तत्र चाचरेत् ॥ ६० ॥
अष्टादश स्युः संस्काराः कुण्डानां तन्त्रवर्त्मना ।
वीक्षणं मूलमन्त्रेण शरेण प्रोक्षणं चरेत् ॥ ६१ ॥
तेनैव ताडनं दर्भैर्वर्मणाभ्युक्षणं मतम् ।
अस्त्रेण खननोद्धारौ हृन्मन्त्रेण प्रपूरणम् ॥ ६२ ॥
समीकरणमस्त्रेण सेचनं वर्मणा मतम् ।
कुट्टनं हेतिमन्त्रेण वर्ममन्त्रेण मार्जनम् ॥ ६३ ॥

विलेपनं कलारूपकल्पनं तदनन्तरम् ।
त्रिसूत्रीकरणं पश्चाद् हृदयेनार्चनं भवेत् ॥ ६४ ॥
अस्त्रेण वज्रीकरणं हृन्मन्त्रेण जलैः शुभैः ।
योनिकुण्डानि देवेशि संस्कुर्यात् साधकोत्तमः ॥ ६५ ॥
तस्मिन् कुण्डे महेशानि रेखात्रयं समाचरेत् ।
प्रागग्रा उदगग्रा वा तिस्रो रेखा लिखेत् ततः ॥ ६६ ॥
प्रागग्राणां स्मृता देवा मुकुन्देशपुरन्दराः ।
रेखाणामुदगग्राणां ब्रह्मवैवस्वतेन्दवः ॥ ६७ ॥
अथवा त्रिकोणवृत्तं चतुरस्रं लिखेत् ततः ।
तत्र वह्नेर्योगपीठमर्चयेत् प्राणवल्लभे ॥ ६८ ॥
वामा ज्येष्ठा च रौद्री च अम्बिका शक्तयः क्रमात् ।
ततो देवि महाभागे ताराकुण्डं प्रपूजयेत् ॥ ६९ ॥
तन्मध्ये परमेशानीं नीलां वागीश्वरीं यजेत् ।
ततश्च श्रोत्रियो वह्निं तद्बीजेनैव चोद्धरेत् ॥ ७० ॥
हूँफट्कारेण देवेशि क्रव्यादेभ्यस्ततः परम् ।
वह्निजायावधिमन्त्रं वह्नेः सं(त्य?ते)जनं जपेत् ॥ ७१ ॥
तमग्निं शोधयेत् तत्र धेनुमुद्रावगुण्ठनम् ।
वारुणेनैव मन्त्रेण अमृतीकरणं मतम् ॥ ७२ ॥
कराभ्यां च समुद्धृत्य भ्रामयेद् उपरि त्रिधा ।
शिवस्य बीजबुद्ध्या तु तद्योनौ परमेश्वरि ॥ ७३ ॥
ह्रींबीजमादौ संजप्य वह्निमूर्तिं च ङेयुताम् ।
इत्यभ्यर्च्य महादेवि इडयाकृष्य सुन्दरि ॥ ७४ ॥
ततः कुम्भकयोगेन कूर्चबीजं समुच्चरन् ।
वह्नेश्चैतन्यापादान्ते ङेयुते परमेश्वरि ॥ ७५ ॥

ततस्तु ज्वालयेद् वह्निं चिन्मन्त्रेण महेश्वरि ।
चिन्मन्त्रं परमेशानि शृणुष्वैकमनाः प्रिये ॥ ७६ ॥
"चित पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा ।"
वह्न्यङ्गं परमेशानि न्यासं कुर्याद् वरानने ।
सहस्रार्चिषे हृदयाय नमोऽन्तं न्यासमुत्तमम् ॥ ७७ ॥
स्वस्तिपूर्णाय शिरसे स्वाहान्तोऽयं मनुः स्मृतः ।
उत्तिष्ठ पुरुषायेति शिखायै वषडित्यपि ॥ ७८ ॥
धूमव्यापिने कवचाय हुमित्येव सुन्दरि ।
सप्तजिह्वाय नेत्रत्रयाय वौषडिति प्रिये ॥ ७९ ॥
धनुर्धराय अस्त्राय फडित्यङ्गानि संन्यसेत् ।
आवाहनस्य मन्त्रं वै शृणु हे नगनन्दिनि ॥ ८० ॥
प्रणवं पूर्वमुद्धृत्य वैश्वानर ततः परम् ।
जातवेद लोहिताक्ष इहावह ततः परम् ॥ ८२ ॥
सर्वकर्माणि साधय वह्निजायावधिर्मनुः ।
इत्यनेन च संपूज्य ध्यायेद् वह्निं समाहितः ॥ ८३ ॥
ध्यानं शृणु महेशानि ध्यानात् सर्वज्ञकारकम् ।
बन्धूकपुष्पसंकाशं सुतप्तकनकप्रभम् ॥ ८४ ॥
पद्महस्तं महाबाहुं वदनद्वयशोभितम् ।
सप्तच्छन्दोमयकरं वसतित्र(य)विग्रहम् ॥ ८५ ॥
त्रिधा ज्ञात्वा त्रिपादार्थं हव्यकव्यविवाहनम् ।
ब्रह्माध्वर्युद्गातृहोतृ–चतुःशृङ्गविराजितम् ॥ ८६ ॥
पञ्चरात्रं पाशुपतं देवानां तु महासनम् ।
पौद्रं वैदिकमित्येतत् पद्मपिङ्गलविलोचनम् ॥ ८७ ॥
वेदार्थचतुरश्रोत्रं स्तोत्रशास्त्रमयध्वनिम् ।
रसानलजटाबद्ध–मणिकोटरभास्करम् ॥ ८८ ॥

हेमालङ्कारसंयुक्तं हेमकुण्डलमण्डितम् ।
रक्ताम्भोरुहमध्यस्थं स्वस्तिकासनसंस्थितम् ॥ ८९ ॥
पृष्ठदेशसमालम्बि—सौवर्णघृतपात्रकम् ।
वामैस्त्रिभिर्बाहुभिश्च दधानं रक्तवाससम् ॥ ९० ॥
सदा शब्दायमानं तु एधमानं स्वतेजसा ।
तोमरं तालवृन्तं च सौवर्णघृतपात्रकम् ॥ ९१ ॥
व्यावृत्तताम्रवदनं सप्तजिह्वासमाकुलम् ।
एवं ध्यायेद् महावह्निं चतुर्वर्गफलप्रदम् ॥ ९२ ॥
सप्त जिह्वाः प्रपूज्याथ पूर्वादिदिक्षु सुन्दरि ।
ब्राह्म्याद्याः पूजयेद् देवि स्वकर्मसिद्धये प्रिये ॥ ९३ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथेन्द्राणी चामुण्डा चैव सुन्दरि ॥ ९४ ॥
महालक्ष्मीर्महेशानि पूजयेत परमेश्वरि ।
बहिर्देशे पुनर्लक्ष्मीस्तथा चैव सरस्वती ॥ ९५ ॥
रतिः प्रीतिश्च कीर्तिश्च शान्तिः पुष्टिश्च सुन्दरि ।
तुष्टिश्चैव महेशानि बहिर्देशे प्रपूजयेत् ॥ ९६ ॥
मेखलासु महेशानि ब्रह्माणं पूजयेत् सुधीः ।
मेखलासु च सर्वासु वेष्टयेद् दर्भसंकुलैः ॥ ९७ ॥
त्रिपंक्त्याचरितं कुण्डं ततो व्याहृतिभिर्हुनेत् ।
त्रिः प्रताप्य महेशानि स्रुवं च प्रोक्षयेज्जलैः ॥ ९८ ॥
वामदक्षिणहस्ताभ्यां पुनः प्रताप्य सुन्दरि ।
दक्षिणे परमेशानि स्थापयेच्च स्रुवस्रुचौ ॥ ९९ ॥
अस्त्रमन्त्रेण देवेशि आज्यपात्रस्य प्रोक्षणम् ।
ततः पवित्रं तस्मिन् वै क्षिप्त्वा वह्नौ च निक्षिपेत् ॥ १०० ॥

स्रुवेण परमेशानि हृदन्तेन महेश्वरि ।
तत्पात्रादाज्यमानीय हुनेद्वह्नौ महेश्वरि ॥ १०१ ॥
अग्नये च महेशानि सोमाय च ततः परम् ।
अग्नीषोमपदौ ङेन्तौ वह्निजायावधिः प्रिये ॥ १०२ ॥
वामदक्षिणमध्यात् तु गृह्णीयाद् आज्यमुत्तमम् ।
अग्नये स्विष्टकृते स्वाहा हुनेत् सुरगणार्चिते ॥ १०३ ॥
मायाबीजं महेशानि हृदन्तेन महेश्वरि ।
गर्भाधानादिकं कर्म कल्पयामि महेश्वरि ॥ १०४ ॥
सप्तसप्ताहुतीर्दद्यादन्येषां परमेश्वरि ।
विवाहान्तं कर्मगणं प्रोच्य संस्कारमाचरेत् ॥ १०५ ॥
तस्मिन्नग्नौ महेशानि देवीं संपूजयेन्नरः ।
तद्वह्नेरात्मना चैक्यं विभाव्य परिकल्पयेत् ॥ १०६ ॥
ततश्च मूलमन्त्रेण जुहुयात् षोडशाहुतीः ।
सतिलैश्च त्रिमध्वक्तैः सरक्तैः करवीरकैः ॥ १०७ ॥
अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तथा ।
जुहुयाद् मूलमन्त्रेण महादेव्यै महेश्वरि ॥ १०८ ॥
पृथक् कृत्वा महेशानि हुनेदावरणादिकम् ।
प्रणवं पूर्वमुच्चार्य अग्नये चैतदेव हि ॥ १०९ ॥
पृथिव्यै चैव महते स्वाहान्तोऽयं मनुः स्मृतः ।
भुवश्च वायवे चैव अन्तरिक्षाय चैव हि ॥ ११० ॥
दिवे चैव महेशानि वह्निजायावधिर्मनुः ।
स्वर्गाय चैव सूर्याय तथा चन्द्रमसे प्रिये ॥ १११ ॥
नक्षत्रेभ्यो महेशानि वह्निजायावधिर्मनुः ।
तदन्ते महतीं पूर्वां (जां) कुर्यात् चैव वरानने ॥ ११२ ॥

तद्वह्निं रत्तयेद् धीमान् यथाशक्ति विधानतः ।
न्युब्जेन पाणिना देवि होमयेत् सुरवन्दिते ॥ ११३ ॥
उत्तानेनैव हस्तेन यदि होमं करोति च ।
तदा तज्जनितं पुण्यं न भवेत् परमेश्वरि ॥ ११४ ॥
इति ते कथितं दिव्यं कुण्डादीनां निरूपणम् ।
प्रयत्नात् परमेशानि कर्तव्यं होमकर्मणि ॥ ११५ ॥
अथ वच्ये महेशानि सावधानावधारय ।
माघे मासि सिते पत्ते सप्तमी या तिथिर्भवेत् ॥ ११६ ॥
तस्यां रात्रौ महादेवीं पूजयेत् परमेश्वरीम् ।
चतुर्भुजां महारौद्रीं श्मशानालयवासिनीम् ॥ ११७ ॥
मुण्डाभयखड्गवरान् दधतीं परमेश्वरीम् ।
मुण्डमालासमाकीर्णा लोचनत्रयसंयुताम् ॥ ११८ ॥
गते तु प्रथमे यामे तृतीयप्रहरावधि ।
पूजयेत् परमेशानीं महाविभवविस्तरैः ॥ ११६ ॥
पूर्वोक्तपूजया देवि पूजयेत् कालरात्रिकाम् ।
सहस्रस्य प्रमाणेन जपं कुर्यात् शुचिस्मिते ॥ १२० ॥
होमयेत् परमेशानि पूर्वोक्तेन महेश्वरि ।
नैवेद्यं परमं देवि अष्टद्रव्यादिकं प्रिये ॥ १२१ ॥
दद्यात् प्रियतरं वस्तु महामायाप्रियंकरम् ।
अकुर्वन् निरयं याति सत्यं सत्यं महेश्वरि ॥ १२२ ॥
अथ ते कथयिष्यामि सन्ध्योपासनकं विधिम् ।
आचम्य प्राङ्मुखो भूत्वा दिवसे परमेश्वरि ॥ १२३ ॥
रात्रौ उदङ्मुखः कुर्याद् आह्निकं प्रियमुत्तमम् ।
अन्येषां पापराशीनां नाशकं विद्धि पार्वति ॥ १२४ ॥

भ्रूणहत्या सुरापानं सुवर्णहरणं तथा ।
गुरुदाराभिगमनं यच्चान्यद् दुष्कृतं कृतम् ॥ १२५ ॥
सर्वमेतत् पुनातीयं महाभैरवरूपधृत् ।
द्विभुजां पीतवसनां नानालङ्कारभूषिताम् ॥ १२६ ॥
रक्तवर्णां कृशाङ्गीं च त्रिवलीवलयोज्ज्वलाम् ।
पुस्तकं परमं दिव्यं दक्षिणे बिभ्रतीं शुभाम् ॥ १२७ ॥
शिक्षासूत्रं तथा वामे बिभ्रतीं नयनत्रयाम् ।
कौशेयवसनां चापि देवीं सन्ध्यां विभावयेत् ॥ १२८ ॥
इति ते कथितं दिव्यं ध्यानं सुरगणार्चिते ।
ध्यात्वा सन्ध्यां विशेषेण सर्वपापक्षयो भवेत् ॥ १२९ ॥
आचमनं तथा वापि तीर्थस्यावाहनं ततः ।
प्राणायामं षडङ्गस्य न्यासमुत्तमकं ततः ॥ १३० ॥
हस्ततले जलं नीत्वा मन्त्रमुच्चार्य पञ्चधा ।
गलितोदकतो देवि मूर्धानमभिषेचयेत् ॥ १३१ ॥
तज्जलं दक्षिणे हस्ते आदाय परमेश्वरि ।
तेजोरूपं तज्जलं तु कर्षयेद् इडया प्रिये ॥ १३२ ॥
प्रक्षाल्य पापं देहान्तः रेचयेत् पिङ्गलान्तरात् ।
हस्तस्य क्षालनं कुर्याद् अर्घ्यं सूर्याय दापयेत् ॥ १३३ ॥
महादेव्यै त्रिरावृत्त्या चार्घ्यं दद्यात् सुरेश्वरि ।
गायत्रीं ध्यानसंयुक्तां प्रजपेत् तदनन्तरम् ॥ १३४ ॥
ततो देवान् प्रतर्प्यैव इष्टदेवं त्रिः तर्पयेत् ।
जपं समर्प्य देवेशि मूलमन्त्रं जपेत् ततः ॥ १३५ ॥
अष्टोत्तरशतावृत्त्या प्रजप्य मन्त्रमुत्तमम् ।
ततो जपं समर्प्यैवं प्रणमेद् दण्डवद् भुवि ॥ १३६ ॥

प्राणायामं षडङ्गं च कुर्याच्चान्ते महेश्वरि ।
अमावास्या पौर्णमासी श्राद्धीयदिवसे तथा ॥ १३७ ॥
संक्रान्तौ परमेशानि सन्ध्यां चैव समाचरेत् ।
चतुर्विधानि कर्माणि देवका(ष्टे?र्ये)षु पार्वति ॥ १३८ ॥
आगमं नु तथा विद्धि यतो नित्यागमक्रिया ।
सन्ध्यां सायन्तनीं कुर्याद् द्वादश्यादिष्वपि प्रिये ॥ १३९ ॥
अकुर्वन् निरयं याति एकमेव हि मद्वचः ।
इति ते कथितं दिव्यमाह्निकाचारमुत्तमम् ॥ १४० ॥
त्रिःसन्ध्यां परमेशानि कुर्यात् साधकसत्तमः ।
नास्ति यस्यादरस्तत्र न स ब्राह्मण उच्यते ॥ १४१ ॥
क्रुद्धा भगवती तस्य कामान् इष्टान् निहन्ति वै ।
संक्षेपेणैव देवेशि शृणु पूजाविधिं शिवे ॥ १४२ ॥
आदौ ऋष्यादिविन्यासः करशुद्धिस्ततः परम् ।
अङ्गुलीव्यापकन्यासौ हृदादिन्यास एव च ॥ १४३ ॥
तालत्रयं च दिग्बन्धः प्राणायामस्ततः परम् ।
ध्यानं पूजा जपश्चैतत् सर्वतन्त्रेष्वयं क्रमः ॥ १४४ ॥
बलिदानं तथा कार्यं यथावत् तन्त्रवेदिभिः ।
पूजयेद् भैरवं दुर्गां तथा चैव महेश्वरीम् ॥ १४५ ॥
वृषभं नन्दिनं चैव अतियत्नेन पूजयेत् ।
महाकालं यजेद् धीमान् सर्वागमविशारदः ॥ १४६ ॥
चक्रराजं पूजयित्वा सर्वसिद्धीश्वरो भवेत् ।
आदौ लिङ्गं महादेवं पूजयेद् यत्नतः शिवे ॥ १४७ ॥
तस्मिंश्चैव हि समये स्वेष्टदेवं प्रपूजयेत् ।
तस्माद् निर्माल्यपुष्पं च गृह्णीयाद् भक्तिभावतः ॥ १४८ ॥

इष्टपूजां विना लिङ्गनिर्माल्यं च निषिध्यते ।

इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (कालीध्यानादिपूजा-कुण्डमेखलायोनिनिर्णय-अग्निकार्यादिनिरूपणं) सप्तदशः पटलः ॥ १७ ॥

अथ

## अष्टादशः पटलः ।

श्रीदेव्युवाच ।

देवदेव महादेव सृष्टिस्थित्यन्तकारक ।
प्रसङ्गेन महादेव्या विस्तरं कथितं मयि ॥ १ ॥
देव्या नीलसरस्वत्याः सहस्रं परमेश्वर ।
नाम्नां श्रोतुं महेशान प्रसादः क्रियतां मयि ।
कथयस्व महादेव यद्यहं तव वल्लभा ॥ २ ॥

श्रीभैरव उवाच ।

साधु पृष्टं महादेवि सर्वतन्त्रेषु गोपितम् ।
नाम्नां सहस्रं तारायाः कथितुं नैव शक्यते ॥ ३ ॥
प्रकाशात् सिद्धिहानिः स्यात् श्रिया च परिहीयते ।
प्रकाशयति यो मोहात् षण्मासाद् मृत्युमाप्नुयात् ॥ ४ ॥

अकथ्यं परमेशानि अकथ्यं चैव सुन्दरि ।
क्षमस्व वरदे देवि यदि स्नेहोऽस्ति मां प्रति ॥ ५ ॥
सर्वस्वं शृणु हे देवि सर्वागमविदां वरे[1] ।
धनसारं महादेवि गोप्तव्यं परमेश्वरि ॥ ६ ॥
आयुर्गोप्यं गृहच्छिद्रं गोप्यं न पापभाग् भवेत् ।
सुगोप्यं परमेशानि गोपनात् सिद्धिमश्नुते ॥ ७ ॥
प्रकाशात् कार्यहानिश्च प्रकाशात् प्रलयं भवेत् ।
तस्माद् भद्रे महेशानि न प्रकाश्यं कदाचन ॥ ८ ॥
इति देववचः श्रुत्वा देवी परमसुन्दरी ।
विस्मिता परमेशानी विषण्णा तत्र जायते ॥ ९ ॥
शृणु हे परमेशान कृपासागरपारग ।
तव स्नेहो महादेव मयि नास्त्यत्र निश्चितम् ॥ १० ॥
भद्रं भद्रं महादेव इति कृत्वा महेश्वरी ।
विमुखीभूय देवेशी तत्रास्ते शैलजा शुभा ॥ ११ ॥
विलोक्य विमुखीं देवीं महादेवो महेश्वरः ।
प्रहस्य परमेशानीं परिष्वज्य प्रियां कथाम् ॥ १२ ॥
कथयामास तत्रैव महादेव्यै महेश्वरि ।
मम सर्वस्वरूपा त्वं जानीहि नगनन्दिनि ॥ १३ ॥
त्वां विनाहं महादेवि पूर्वोक्तशवरूपवान् ।
क्षमस्व परमानन्दे क्षमस्व नगनन्दिनि ॥ १४ ॥
यथा प्राणो महेशानि देहे तिष्ठति सुन्दरि ।
तथा त्वं जगतामाद्ये चरणे पतितोऽस्म्यहम् ॥ १५ ॥
इति मत्वा महादेवि रक्ष मां तव किङ्करम् ।
ततो देवी महेशानी त्रैलोक्यमोहिनी शिवा ॥ १६ ॥

---

1 'शिवे' ख. पाठः ।

महादेवं परिष्वज्य प्राह गद्गदया गिरा ।
सदा देहस्वरूपाहं देही त्वं परमेश्वर ॥ १७ ॥
तथापि वञ्चनां कर्तुं मामित्थं वदसि प्रियम् ।
महादेवः पुनः प्राह भैरवि प्राणवल्लभे ॥ १८ ॥
नाम्नां सहस्रं तारायाः श्रोतुमिच्छस्यशेषतः ।

श्रीदेव्युवाच ।

न श्रुतं परमेशान तारानामसहस्रकम् ।
कथयस्व महाभाग सत्यं परमसुन्दरम् ॥ १९ ॥

(श्रीपार्वत्युवाच ।)

कथमीशान सर्वज्ञ लभन्ते सिद्धिमुत्तमाम् ।
साधकाः सर्वदा येन तन्मे कथय सुन्दर ॥ २० ॥
यस्मात् परतरं नास्ति स्तोत्रं तन्त्रेषु निश्चितम् ।
सर्वपापहरं दिव्यं सर्वापद्विनिवारकम् ॥ २१ ॥
सर्वज्ञानकरं पुण्यं सर्वमङ्गलसंयुतम् ।
पुरश्चर्याशतैस्तुल्यं स्तोत्रं सर्वप्रियङ्करम् ॥ २२ ॥
वश्यप्रदं मारणदमुच्चाटनप्रदं महत् ।
नाम्नां सहस्रं तारायाः कथयस्व सुरेश्वर ॥ २३ ॥

श्रीमहादेव उवाच ।

नाम्नां सहस्रं तारायाः स्तोत्रपाठाद् भविष्यति ।
नाम्नां सहस्रं तारायाः कथयिष्याम्यशेषतः ॥ २४ ॥
शृणु देवि सदा भक्त्या भक्तानां परमं हितम् ।
विना पूजोपहारेण विना जा(पे)प्ये)न यत् फलम् ॥ २५ ॥
तत् फलं सकलं देवि कथयिष्यामि तच्छृणु ।

ॐ अ(स्याः)स्य) श्रीतारादेव्या भक्तिकुलसर्व(स्व) नाम्नः (सह-

स्रनाम) स्तोत्रस्य, अक्षोभ्य ऋषिः, बृहती-उष्णिक् छन्दः, श्रीउग्रतारा श्रीमदेकजटा श्रीनीलसरस्वती देवता, पुरुषार्थचतुष्टयसिद्ध्यर्थे विनियोगः ॥

तारा रात्रिर्महारात्रिर्कालरात्रिर्महामतिः[1] ।
कालिका कामदा माया महामाया महास्मृतिः[2] ॥ २६ ॥
महादानरता यज्ञा यज्ञोत्सवविभूषिता ।
चन्द्रवक्त्रा[3] चकोराक्षी चारुनेत्रा सुलोचना ॥ २७ ॥
त्रिनेत्रा महती देवी कुरङ्गाक्षी मनोरमा[4] ।
ब्राह्मी नारायणी ज्योत्स्ना चारुकेशी सुमूर्धजा ॥ २८ ॥
वाराही वारुणी विद्या महाविद्या महेश्वरी ।
सिद्धा[5] कुञ्चितकेशा च महायज्ञस्वरूपिणी ॥ २९ ॥
गौरी चम्पकवर्णा च कृशाङ्गी शिवमोहिनी ।
सर्वानन्दस्वरूपा च सर्वशङ्कैक[6]तारिणी ॥ ३० ॥
विद्यानन्दमयी नन्दा भद्रकाली स्वरूपिणी ।
गायत्री सुचरित्रा च कौलव्रतपरायणा ॥ ३१ ॥
हिरण्यगर्भा भूगर्भा महागर्भा सुलोचनी ।
हिमवत्तनया दिव्या महामेघस्वरूपिणी ॥ ३२ ॥
जगन्माता जगद्धात्री जगतामुपकारिणी ।
ऐन्द्री सौम्या तथा घोरा[7] वारुणी माधवी[8] तथा ॥ ३३ ॥
आग्नेयी वैनतेयी[9] च ऐशानी चण्डिकात्मिका ।
सुमेरुतनया नित्या सर्वेषामुपकारिणी ॥ ३४ ॥

---

१ 'कपालिनी' ख. पाठः । २ 'महोत्सवा' ख. । ३ 'वज्रा' क. । ४ 'हरा' ख. । ५ 'पिङ्गा' ख. । ६ 'संकट' ख. । ७ 'याम्या' ख. । ८ 'वायवी' ख. । ९ 'नैर्ऋती चैव' ख पाठः ।

ललज्जिह्वा सरोजाक्षी मुण्डस्रक्परिभूषिता ।
सर्वानन्दमयी सर्वा सर्वानन्दस्वरूपिणी ॥ ३५ ॥
धृतिर्मेधा तथा लक्ष्मीः श्रद्धा पन्नगगामिनी ।
रुक्मिणी जानकी दुर्गाम्बिका सत्यवती रतिः ॥ ३६ ॥
कामाख्या कामदा नन्दा नारसिंही सरस्वती ।
महादेवरता चण्डी चण्डदोर्दण्डखण्डिनी ॥ ३७ ॥
दीर्घकेशी सुकेशी च पिङ्गकेशी महाकचा ।
भवानी भवपत्नी (१००) च भवभीतिहरा सती[1] ॥ ३८ ॥
पौरन्दरी तथा विष्णोर्जाया माहेश्वरी तथा ।
सर्वेषां जननी विद्या[2]चार्वङ्गी दैत्यनाशिनी ॥ ३९ ॥
सर्वरूपा[3] महेशानी कामिनी वरवर्णिनी ।
महाविद्या महामाया महामेधा महोत्सवा ॥ ४० ॥
विरूपा विश्वरूपा च मृडानी मृडवल्लभा ।
कोटिचन्द्रप्रतीकाशा शतसूर्यप्रकाशिनी ॥ ४१ ॥
जह्नुकन्या महोग्रा च पार्वती विश्वमोहिनी ।
कामरूपा महेशानी नित्योत्साहा मनस्विनी ॥ ४२ ॥
वैकुण्ठनाथपत्नी च तथा शङ्करमोहिनी ।
काश्यपी कमला कृष्णा कृष्णरूपा च कालिनी ॥ ४३ ॥
माहेश्वरी वृषारूढा सर्वविस्मयकारिणी ।
मान्या मानवती शुद्धा कन्या हिमगिरेस्तथा ॥ ४४ ॥
अपर्णा पद्मपत्राक्षी नागयज्ञोपवीतिनी ।
महाशङ्खधरा कान्ता कमनीया नगात्मजा ॥ ४५ ॥
ब्रह्माणी वैष्णवी शम्भोर्जाया गङ्गा जलेश्वरी ।
भागीरथी मनोबुद्धिर्नित्या विद्यामयी तथा ॥ ४६ ॥

---

१ 'सुक्ता' क. । २ 'शची' ख. । ३ 'नित्या' ख. । ४ 'वीररूपा' ख. । ५ 'मृत्यु' ख. पाठः ।

हरप्रिया गिरिसुता हरपत्नी तपस्विनी ।
महाव्याधिहरा देवी महाघोरस्वरूपिणी ॥ ४७ ॥
महापुण्यप्रभा भीमा मधुकैटभनाशिनी ।
शङ्खिनी वज्रिणी धात्री तथा पुस्तकधारिणी ॥ ४८ ॥
चामुण्डा चपला तुङ्गा शुम्भदैत्यनिकृन्तनी ।
शान्तिर्निद्रा महानिद्रा पूर्णनिद्रा च रेणुका ॥ ४९ ॥
कौमारी कुलजा कुन्ती[1] कौलव्रतपरायणा ।
वनदुर्गा सदाचारा द्रौपदी द्रुपदात्मजा ॥ ५० ॥
यशस्विनी यशस्या च यशोधात्री यशःप्रदा ।
सृष्टिरूपा महागौरी निशुम्भप्राणनाशिनी ॥ ५१ ॥
पद्मिनी (२००) वसुधा पृथ्वी रोहिणी विन्ध्यवासिनी ।
शिवशक्तिर्महाशक्तिः शङ्खिनी शक्तिनिर्गता[2] ॥ ५२ ॥
दैत्यप्राणहरा देवी सर्वरक्षणकारिणी ।
क्षान्तिः क्षेमङ्करी चैव बुद्धिरूपा महाधना ॥ ५३ ॥
श्रीविद्या भैरवी भव्या भवानी भव[3]नाशिनी ।
तापिनी भाविनी सीता तीक्ष्णतेजःस्वरूपिणी ॥ ५४ ॥
दात्री दानपरा काली दुर्गा दैत्यविभूषणा ।
महापुण्यप्रदा भीमा मधुकैटभनाशिनी ॥ ५५ ॥
पद्मा पद्मावती कृष्णा तुष्टा पुष्टा तथोर्वशी ।
वज्रिणी वज्रहस्ता च तथा नारायणी शिवा ॥ ५६ ॥
खड्गिनी खड्गहस्ता च खड्गखर्परधारिणी ।
देवाङ्गना देवकन्या[4] देवमाता पुलोमजा ॥ ५७ ॥
सुखिनी स्वर्गदात्री च सर्वसौख्यविवर्धिनी ।
शीला शीलावती सूक्ष्मा सूक्ष्माकारा वरप्रदा ॥ ५८ ॥

१ 'कान्तिः' ख. । २ 'नाशिनी' ख. । ३ 'भय' ख । ४ 'मान्या' ख पाठः ।

वरेण्या वरदा वाणी ज्ञानिनी ज्ञानदा सदा[1] ।
उग्रकाली महाकाली भद्रकाली च दक्षिणा ॥ ५९ ॥
भृगुवंशसमुद्भूता भार्गवी भृगुवल्लभा ।
शूलिनी शूलहस्ता च कर्त्रीखर्परधारिणी ॥ ६० ॥
महावंशसमुद्भूता मयूरवरवाहना ।
महाशङ्खरता रक्ता[2] रक्तखर्परधारिणी ॥ ६१ ॥
रक्ताम्बरधरा रामा रमणी सुरनायिका ।
मोक्षदा शिवदा श्यामा मदविभ्रममन्थरा ॥ ६२ ॥
परमानन्ददा ज्येष्ठा योगिनी गणसेविता ।
सारा जाम्बवती चैव सत्यभामा नगात्मजा ॥ ६३ ॥
रौद्रा रौद्रबला घोरा रुद्रसारारुणात्मिका ।
रुद्ररूपा महारौद्री (३००) रौद्रदैत्यविनाशिनी ॥ ६४ ॥
कौमारी कौशिकी चण्डा[3] कालदैत्यविनाशिनी ।
शम्भुपत्नी शम्भुरता शम्भुजाया महोदरी ॥ ६५ ॥
शिवपत्नी शिवरता शिवजाया शिवप्रिया ।
हरपत्नी हररता हरजाया हरप्रिया ॥ ६६ ॥
मदनान्तककान्ता च मदनान्तकवल्लभा ।
गिरिजा गिरिकन्या च गिरीशस्य च वल्लभा ॥ ६७ ॥
भूता भव्या भवा स्पष्टा पावनी परपालिनी ।
अदृश्या च व्यक्तरूपा इष्टानिष्टप्रवर्द्धिनी ॥ ६८ ॥
अच्युता प्रच्युतप्राणा प्रमदा वासवेश्वरी ।
अपांनिधिसमुद्भूता धारिणी च प्रतिष्ठिता ॥ ६९ ॥
उद्भवा क्षोभणा क्षेमा श्रीगर्भा परमेश्वरी ।
कमला पुष्पदेहा च कामिनी कञ्जलोचना ॥ ७० ॥

---

१ 'मला' ख. । २ 'शक्ता' ख. पाठः । ३ 'विद्या' ख. पाठः ।

शरण्या कमला प्रीतिर्निर्मलानन्दवर्धिनी ।
कपर्दिनी कराला च निर्मला देवरूपिणी ॥ ७१ ॥
उदीर्णभूषणा भव्या सुरसेना महोदरी ।
श्रीमती शिशिरा नव्या[1] शिशिराचलकन्यका ॥ ७२ ॥
सुरमान्या सुरश्रेष्ठा ज्येष्ठा प्राणेश्वरी स्थिरा ।
तमोघ्नी ध्वान्तसंहर्त्री प्रयतात्मा पतिव्रता ॥ ७३ ॥
प्रद्योतिनी रथारूढा सर्वलोकप्रकाशिनी ।
मेधाविनी महावीर्या हंसी संसारतारिणी ॥ ७४ ॥
प्रणतप्राणिनामार्तिहारिणी दैत्यनाशिनी ।
डाकिनी शाकिनीदेवी वरखट्वाङ्गधारिणी ॥ ७५ ॥
कौमुदी कुमुदानन्दा[3] कौलिका कुलजामरा ।
गर्विता गुणसंपन्ना नगजा खगवाहिनी ॥ ७६ ॥
चन्द्रानना महोग्रा च चारुमूर्धजशोभना ।
मनोज्ञा माधवी मान्या (४००) माननीया सतां सुहृत्[4] ॥ ७७ ॥
ज्येष्ठा श्रेष्ठा मघा पुष्या धनिष्ठा पूर्वफाल्गुनी ।
रक्तबीजनिहन्त्री च रक्तबीजविनाशिनी ॥ ७८ ॥
चण्डमुण्डनिहन्त्री च चण्डमुण्डविनाशिनी ।
कर्त्री हर्त्री सुकर्त्री च विमलामलवाहिनी ॥ ७९ ॥
विमला भास्करी वीणा[5] महिषासुरघातिनी ।
कालिन्दी यमुना वृद्धा सुरभिः[6] बालिका सती ॥ ८० ॥
कौशल्या कौमुदी मैत्रीरूपिणी चाप्यरुन्धती ।
पुरारिगृहिणी पूर्णा पूर्णानन्दस्वरूपिणी ॥ ८१ ॥
पुण्डरीकाक्षपत्नी च पुण्डरीकाक्षवल्लभा ।
संपूर्णचन्द्रवदना बालचन्द्रसमप्रभा ॥ ८२ ॥

---

१ 'नन्दा' ख. । २ 'परि' ख. । ३ 'कुन्दा' ख. पाठः । ४ 'महागुणा' ख. पाठः ।
५ 'भीमा' ख. । ६ 'युवतिः' ख. पाठः

रेवती रमणी चित्रा चित्राम्बरविभूषणा[1] ।
सीता वीणावती चैव यशोदा विजया प्रिया ॥ ८३ ॥
नवपुष्पसमुद्भूता नवपुष्पोत्सवोत्सवा ।
नवपुष्पस्रजामाला माल्यभूषणभूषिता ॥ ८४ ॥
नवपुष्पसमप्राणा नवपुष्पोत्सवप्रिया ।
प्रेतमण्डलमध्यस्था सर्वाङ्गसुन्दरी शिवा ॥ ८५ ॥
नवपुष्पात्मिका षष्ठी पुष्पस्तवकमण्डला ।
नवपुष्पगुणोपेता श्मशानभैरवप्रिया ॥ ८६ ॥
कुलशास्त्रप्रदीपा च कुलमार्गप्रवर्द्धिनी ।
श्मशानभैरवी काली भैरवी भैरवप्रिया ॥ ८७ ॥
आनन्दभैरवी ध्येया भैरवी कुरुभैरवी ।
महाभैरवसंप्रीता भैरवीकुलमोहिनी ॥ ८८ ॥
श्रीविद्याभैरवी नीतिभैरवी गुणभैरवी ।
संमोहभैरवी पुष्टिभैरवी तुष्टिभैरवी ॥ ८९ ॥
संहारभैरवी सृष्टिभैरवी स्थितिभैरवी ।
आनन्दभैरवी वीरा सुन्दरी स्थितिसुन्दरी ॥ ९० ॥
गुणानन्दस्वरूपा च सुन्दरी कालरूपिणी ।
श्रीमायासुन्दरी सौम्यसुन्दरी लोकसुन्दरी ॥ ९१ ॥
श्रीविद्यामोहिनी बुद्धिर्महाबुद्धिस्वरूपिणी ।
मल्लिका हाररसिका हार(ा)लम्बनसुन्दरी ॥ ९२ ॥
नीलपङ्कजवर्णा (५००) च नागकेसरभूषिता ।
जपाकुसुमसङ्काशा जपाकुसुमशोभिता ॥ ९३ ॥
प्रिया प्रियङ्करी विघ्नोदानवेन्द्रविनाशिनी ।
ज्ञानेश्वरी ज्ञानदात्री ज्ञानानन्दप्रदायिनी ॥ ९४ ॥

---

१ 'भूपिता' ख. । २ 'शरीर' ख. पाठः ।

गुणगौरवसंपन्ना गुणशीलसमन्विता ।
रूपयौवनसंपन्ना रूपयौवनशोभिता ॥ ९५ ॥
गुणाश्रया गुणरता गुणगौरवसुन्दरी ।
मदिरामोदमत्ता च ताटङ्कद्वयशोभिता ॥ ९६ ॥
वृक्षमूलस्थिता देवी वृक्षशाखोपरिस्थिता ।
तालमध्याग्रनिलया वृक्षमध्यनिवासिनी ॥ ९७ ॥
स्वयम्भूपुष्पसंकाशा स्वयम्भूपुष्पधारिणी ।
स्वयम्भूकुसुमप्रीता स्वयम्भूपुष्पशोभिनी ॥ ९८ ॥
स्वयम्भूपुष्परसिका नग्ना ध्यानवती सुधा ।
शुक्रप्रिया शुक्ररता शुक्रमज्जनतत्परा ॥ ९९ ॥
पूर्णपर्णा सुपर्णा च निष्पर्णा पापनाशिनी ।
मदिरामोदसंपन्ना मदिरामोदधारिणी ॥ १०० ॥
सर्वाश्रया सर्वगुणा नन्दनन्दनधारिणी ।
नारीपुष्पसमुद्भूता नारीपुष्पोत्सवोत्सवा ॥ १०१ ॥
नारीपुष्पसमप्राणा नारीपुष्परता मृगी ।
सर्वकालोद्भवप्रीता सर्वकालोद्भवोत्सवा ॥ १०२ ॥
चतुर्भुजा दशभुजा अष्टादशभुजा तथा ।
द्विभुजा षड्भुजा प्रीता रक्तपङ्कजशोभिता ॥ १०३ ॥
कौबेरी कौरवी कौर्या कुरुकुल्ला कपालिनी ।
सुदीर्घकदलीजङ्घा रम्भोरू रामवल्लभा ॥ १०४ ॥
निशाचरी निशामूर्तिर्निशाचन्द्रसमप्रभा ।
चान्द्री चान्द्रकला चन्द्रा चारुचन्द्रनिभानना ॥ १०५ ॥
(श्रो?स्रो)तस्वती स्मृतिमती सर्वदुर्गतिनाशिनी ।
सर्वाधारा सर्वमयी सर्वानन्दस्वरूपिणी ॥ १०६ ॥

१ 'शुक्र' ख. पाठः । २ 'नन्दकन्दल' ख. पाठः ।

सर्वचक्रेश्वरी सर्वा सर्वमन्त्रमयी शुभा ।
सहस्रनयनप्राणा सहस्रनयनप्रिया ॥ १०७ ॥
सहस्रशीर्षा सुषमा[1] सदम्भा सर्वसाक्षिका ।
षष्ठिका षष्ठिचक्रस्था षड्वर्गफलदायिनी ॥ १०८ ॥
षड्विंशपद्ममध्यस्था षड्विंशकुलमध्यगा ।
हुँकारवर्णनिलया हुँकाराक्षरभूषणा ॥ १०९ ॥
हकारवर्णनिलया हकाराक्षरभूषणा ।
हारिणी हारवलिता हारहीरकभूषणा ॥ ११० ॥
ह्रींकारबीजसहिता ह्रींकाररूपशोभिता (६००) ।
कन्दर्पस्य कला कुन्दा कौलिनी कुलदर्पिता ॥ १११ ॥
केतकीकुसुमप्राणा केतकीकृतभूषणा ।
केतकीकुसुमासक्ता केतकीपरिभूषिता ॥ ११२ ॥
कर्पूरपूर्णवदना महामाया महेश्वरी ।
कला कीर्तिः क्रिया कीर्णा कदम्बकुसुमोत्सुका ॥ ११३ ॥
कादम्बिनी करिशुण्डा[2] कुञ्जरेश्वरगामिनी ।
खर्वा खञ्जननयना खञ्जनद्वन्द्वभूषणा ॥ ११४ ॥
खद्योत इव दुर्लक्ष्या खद्योत इव चञ्चला ।
महामाया जपद्धात्री गीतवाद्यप्रिया रतिः ॥ ११५ ॥
गणेश्वरी गणेज्या च गुणपूज्या गुणप्रदा ।
गुणाढ्या गुणसंपन्ना गुणदात्री गुणात्मिका ॥ ११६ ॥
गुर्वी गुरुतरा गौरी गाणपत्यफलप्रदा ।
महाविद्या महामेधा तुलिनी गणमोहिनी ॥ ११७ ॥
भव्या भवप्रिया भाव्या भावनीया भवात्मिका ।
घर्घरा घोरवदना घोरदैत्यविनाशिनी ॥ ११८ ॥

---

१ 'सुषमा' ख. पाठः । २ 'करिपतिः' ख. पाठः ।

घोरा घोरवती घोष्या[1] घोरपुत्री घनाचला[2] ।
चर्चरी चारुनयना चारुवक्त्रा चतुर्गुणा ॥ ११६ ॥
चतुर्वेदमयी चण्डी चन्द्रास्या चतुरानना ।
चलच्चकोरनयना चलत्खञ्जनलोचना ॥ १२० ॥
चलदम्भोजनिलया चलदम्भोजशोभिता[3] ।
छत्री छत्रप्रिया छत्रा छत्रचामरशोभिता ॥ १२१ ॥
छिन्नछदा छिन्नशिराश्छिन्ननासा छलात्मिका ।
छलाढ्या छलसंत्रस्ता छलरूपा छलास्थिरा ॥ १२२ ॥
छकारवर्णनिलया छकाराढ्या छलप्रिया ।
छद्मिनी छद्मनिरता छद्मच्छद्मनिवासिनी ॥ १२३ ॥
जगन्नाथप्रिया जीवा जगन्मुक्तिकरी मता ।
जीर्णा जीमूतवनिता जीमूतैरुपशोभिता ॥ १२४ ॥
जामातृवरदा जम्भा जमलार्जुनभञ्जिनी ।
झर्झरी झाकृतिर्झल्ली झरी (७००) झर्झरिका तथा ॥ १२५ ॥
टङ्कारकारिणी टीका सर्वटङ्कारकारिणी ।
ठंकराङ्गी डमरुका डाकारा डमरुप्रिया ॥ १२६ ॥
ढक्कारावरता नित्या तुलसी मणिभूषिता ।
तुला च तोलिका तीर्णा तारा तारणिका तथा ॥ १२७ ॥
तन्त्रविज्ञा तन्त्ररता तन्त्रविद्या च तन्त्रदा ।
तान्त्रिकी तन्त्रयोग्या च तन्त्रसारा च तन्त्रिका ॥ १२८ ॥
तन्त्रधारी तन्त्रकरी सर्वतन्त्रस्वरूपिणी ।
तुहिनांशुसमानास्या तुहिनांशुसमप्रभा ॥ १२९ ॥
तुषाराकरतुल्याङ्गी तुषाराधारसुन्दरी ।
तन्त्रसारा तन्त्रकरी तन्त्रसारस्वरूपिणी ॥ १३० ॥

---

१ 'घोपा' ख. । २ 'घनालया' ख. । ३ 'लोचना' ख. पाठः ।

तुषारधामतुल्यास्या तुषारांशुसमप्रभा ।
तुषाराद्रिसुता तार्क्ष्या ताराङ्गी तालसुन्दरी ॥ १३१ ॥
तारस्वरेण महिता तारस्वरविभूषिता ।
थकारकूटनिलया थकाराक्षरमालिनी ॥ १३२ ॥
दयावती दीनरता दुःखदारिद्र्यनाशिनी ।
दौर्भाग्यदुःखदलिनी दौर्भाग्यपदनाशिनी ॥ १३३ ॥
दुहिता दीनबन्धुश्च दानवेन्द्रविनाशिनी ।
दानपात्री दानरता दानसंमानतोषिता ॥ १३४ ॥
दान्त्यादिसेविता दान्ता दया दामोदरप्रिया ।
दधीचिवरदा तुष्टा दानवेन्द्रविमर्दिनी ॥ १३५ ॥
दीर्घनेत्रा दीर्घकचा दीर्घनासा च दीर्घिका ।
दारिद्र्यदुःखसंनाशा दारिद्र्यदुःखनाशिनी ॥ १३६ ॥
दाम्भिका दन्तुरा दम्भा दम्भासुरवरप्रदा ।
धनधान्यप्रदा धन्या धनेश्वरधनप्रदा ॥ १३७ ॥
धर्मपत्नी धर्मरता धर्माधर्मविनाशिनी[1] ।
धर्मिणी धर्मिका धर्म्या धर्माधर्मविवर्द्धिनी ॥ १३८ ॥
धनेश्वरी धर्मरता धर्मानन्दप्रवर्द्धिनी ।
धनाध्यक्षा धनप्रीता धनाढ्या धनतोषिता ॥ १३९ ॥
धीरा धैर्यवती धिष्ण्या धवलाम्भोजसंनिभा ।
धरिणी धारिणी धात्री धूरणी धरणी धरा (८००) ॥ १४० ॥
धार्मिका धर्मसहिता धर्मनिन्दकवर्जिता ।
नवीना नगजा निम्ना निम्ननाभिर्नगेश्वरी ॥ १४१ ॥
नूतनाम्भोजनयना नवीनाम्भोजसुन्दरी ।
नागरी नगरज्येष्ठा नगराजसुता नगा ॥ १४२ ॥

---

१ 'प्रवर्धिनी' ख. । २ 'सव' ख. पाटः ।

नागराजकृततोषा नागराजविभूषिता ।
नागेश्वरी नागरूढा नागराजकुलेश्वरी ॥ १४३ ॥
नवीनेन्दुकला नान्दी नन्दिकेश्वरवल्लभा ।
नीरजा नीरजाक्षी च नीरजद्वन्द्वलोचना ॥ १४४ ॥
नीरा नीरभवा वाणी नीरनिर्मलदेहिनी ।
नागयज्ञोपवीताढ्या नागयज्ञोपवीतिका ॥ १४५ ॥
नागकेसरसंतुष्टा नागकेसरमालिनी ।
नवीनकेतकीकुन्द–मल्लिकाम्भोजभूपिता ॥ १४६ ॥
नायिका नायकप्रीता नायकप्रेमभूषिता ।
नायकप्रेमसहिता नायकप्रेमभाविता ॥ १४७ ॥
नायकानन्दनिलया नायकानन्दकारिणी ।
नर्मकर्मरता नित्यं नर्मकर्मफलप्रदा ॥ १४८ ॥
नर्मकर्मप्रिया नर्मा नर्मकर्मकृतालया ।
नर्मप्रीता नर्मरता नर्मध्यानपरायणा ॥ १४९ ॥
पौष्णप्रिया च पौष्पेज्या पुष्पदामविभूषिता ।
पुण्यदा पूर्णिमा पूर्णा कोटिपुण्यफलप्रदा ॥ १५० ॥
पुराणागमगोप्या च पुराणागमगोपिता ।
पुराणगोचरा पूर्णा पूर्वा प्रौढा विलासिनी ॥ १५१ ॥
प्रह्लादहृदयाह्लादगेहिनी पुण्यचारिणी ।
फाल्गुनी फाल्गुनप्रीता फाल्गुनप्रेमधारिणी ॥ १५२ ॥
फाल्गुनप्रेमदा चैव फणिराजविभूषिता ।
फणिकाञ्ची फणिप्रीता फणिहारविभूषिता ॥ १५३ ॥
फणीशकृतसर्वाङ्गभूषणा फणिहारिणी ।
फणिप्रीता फणिरता फणिकङ्कणधारिणी ॥ १५४ ॥

फलदा त्रिफला शक्ता फलाभरणभूषिता ।
फकारकूटसर्वाङ्गी फाल्गुनानन्दवर्द्धिनी ॥ १५५ ॥
वासुदेवरता विज्ञा विज्ञविज्ञानकारिणी ।
वीणावती वलाकीर्णा वालपीयूषरोचिका ॥ १५६ ॥
वाला वसुमती विद्या विद्याहारविभूषिता ।
विद्यावती वैद्यपदप्रीता वैवस्वती वलिः ॥ १५७ ॥
वलिविध्वंसिनी चैव वराङ्गस्था (६००) वरानना ।
विष्णोर्वक्षःस्थलस्था च वाग्वती विन्ध्यवासिनी ॥ १५८ ॥
भीतिदा भयदा भानोरंशुजालसमप्रभा ।
भार्गवेज्या भृगोः पूज्या भरद्वारनमस्कृता ॥ १५९ ॥
भीतिदा भयसंहन्त्री भीमाकारा च सुन्दरी ।
मायावती मानरता मानसंमानतत्परा ॥ १६० ॥
माधवानन्ददा माध्वी मदिरामुदितेक्षणा ।
महोत्सवगुणोपेता महती च महद्गुणा ॥ १६१ ॥
मदिरामोदनिरता मदिरामज्जने रता ।
यशोधरी यशोविद्या यशोदानन्दवर्द्धिनी ॥ १६२ ॥
यशःकर्पूरधवला यशोदामविभूषिता ।
यमराजप्रिया योगमार्गानन्दप्रवर्द्धिनी ॥ १६३ ॥
यमस्वसा[1] च यमुना योगमार्गप्रवर्द्धिनी ।
यादवानन्दकर्त्री च यादवानन्दवर्द्धिनी ॥ १६४ ॥
यज्ञप्रीता यज्ञमयी यज्ञकर्मविभूषिता ।
रामप्रीता रामरता रामतोषणतत्परा ॥ १६५ ॥
राज्ञी राजकुलेज्या च राजराजेश्वरी रमा ।
रमणी रामणी रम्या रामानन्दप्रदायिनी ॥ १६६ ॥

१ 'स्वसा' ख. पाठः ।

रजनीकरपूर्णास्या रक्तोत्पलविलोचना ।
लाङ्गलिप्रेमसंतुष्टा लाङ्गलिप्रणयप्रिया ॥ १६७ ॥
लाक्षारुणा च ललना लीला लीलावती लया ।
लङ्केश्वरगुणप्रीता लङ्केशवरदायिनी ॥ १६८ ॥
लवङ्गीकुसुमप्रीता लवङ्गकुसुमस्रजा[1] ।
धाता विवस्वद्‍गृहिणी विवस्वत्प्रेमधारिणी ॥ १६९ ॥
शवोपरिसमासीना शववक्षःस्थलस्थिता ।
शरणागतरक्षित्री शरण्या श्रीः शरद्गुणा ॥ १७० ॥
षट्कोणमध्यमध्यस्था संपद(ह?र्थे)निषेविता ।
हूँकाराकारिणी देवी हूँकाररूपशोभिता ॥ १७१ ॥
क्षेमङ्करी तथा क्षेमा क्षेमधामाविवर्द्धिनी ।
क्षेमाम्नाया तथाज्ञा च इडा ईश्वरवल्लभा ॥ १७२ ॥
उग्रदक्षा तथा चोग्रा अकारादिस्वरोद्भवा ।
ऋकारवर्णकूटस्था ॠकारस्वरभूषिता ॥ १७३ ॥
एकारा च तथा चैका एकाराक्षरवासिता ।
ऐष्टा चैषा तथा चौषा औकाराक्षरधारिणी ॥ १७४ ॥
अंअःकारस्वरूपा च सर्वागमसुगोपिता (१०००) ।
इत्येतत् कथितं देवि तारानामसहस्रकम् ॥ १७५ ॥
य इदं पठति स्तोत्रं प्रत्यहं भक्तिभावतः ।
दिवा वा यदि वा रात्रौ सन्ध्ययोरुभयोरपि ॥ १७६ ॥
स्तवराजस्य पाठेन राजा भवति किङ्करः ।
सर्वागमेषु पूज्यः स्यात् सर्वतन्त्रे स्वयं हरः ॥ १७७ ॥
शिवस्थाने श्मशाने च शून्यागारे चतुष्पथे ।
य पठेच्छृणुयाद् वापि स योगी नात्र संशयः ॥ १७८ ॥

---

१ 'मोत्सुका' ख. । २ 'चक्र' ख. पाठः ।

यानि नामानि सन्त्यस्मिन् प्रसङ्गाद् सुरवैरिणः ।
ग्राह्याणि तानि कल्याणि नान्यान्यपि[1] कदाचन ॥ १७९ ॥
हरेर्नाम न गृह्णीयाद् न स्पृशेत् तुलसीदलम् ।
नान्यचिन्ता प्रकर्तव्या नान्यनिन्दा कदाचन ॥ १८० ॥
सिन्दूरकरवीराद्यैः पुष्पैर्लोहितकैस्तथा ।
योऽर्चयेद् भक्तिभावेन तस्यासाध्यं न किञ्चन ॥ १८१ ॥
वातस्तम्भं जलस्तम्भं गतिस्तम्भं विवस्वतः ।
वह्नेः स्तम्भं[2] करोत्येव स्तवस्यास्य प्रकीर्तनात् ॥ १८२ ॥
श्रियमाकर्षयेत्[3] तूर्णमानृण्यं जायते हठात् ।
यथा तृणं दहेद् वह्निस्तथारीन् मर्दयेत् क्षणात् ॥ १८३ ॥
मोहयेद् राजपत्नीश्च देवानपि वशं नयेत् ।
यः पठेत् शृणुयाद् वापि एकचित्तेन सर्वदा ॥ १८४ ॥
दीर्घायुश्च सुखी वाग्मी वाणी तस्य वशङ्करी ।
सर्वतीर्थाभिषेकेण गयाश्राद्धेन यत् फलम् ॥ १८५ ॥
तत्फलं लभते सत्यं यः पठेदेकचित्ततः ।
येषामाराधने श्रद्धा ये तु साधितुमुद्यताः ॥ १८६ ॥
तेषां कृतित्वं सर्वं स्याद् गतिर्देवि परा च या ।
ऋतुयुक्तलतागारे स्थित्वा दण्डेन ताडयेत् ॥ १८७ ॥
जप्त्वा स्तुत्वा च भक्त्या च गच्छेद् वै [illegible]णीपदम् ।
अष्टम्यां च चतुर्दश्यां नवम्यां शनिवासरे ॥ १८८ ॥
संक्रान्त्यां मण्डले रात्रौ अमावास्यां च योऽर्चयेत् ।
वर्षं व्याप्य च देवेशि तस्यार्थलाभश्च सिद्धयः ॥ १८९ ॥
सुतहीना च या नारी दौर्भाग्यामयपीडिता ।
वन्ध्या वा काकवन्ध्या वा मृतगर्भा च याङ्गना ॥ १९० ॥

---

१ 'तु' ख. पाठः । २ 'शल्यं' ख. पाठः । ३ 'पते' ख. पाठ ।

धनधान्यविहीना च रोगशोकाकुला च या ।
सापि चैतद् महादेवि भूर्जपत्रे लेखापयेत्[1] ॥ १९१ ॥
सव्ये भुजे च बध्नीयात् सर्वसौख्यवती भवेत् ।
एवं पुमानपि प्रायो दुःखेन परिपीडितः ॥ १९२ ॥
सभायां व्यसने घोरे विवादे शत्रुसंकटे ।
चतुरङ्गे च तथा युद्धे सर्वत्रापर[2]प्रपीडिते ॥ १९३ ॥
स्मरणादेव कल्याणि संक्षयं यान्ति दूरतः ।
पूजनीयं प्रयत्नेन शून्यागारे शिवालये ॥ १९४ ॥
बिल्वमूले श्मशाने च तटे वा कुलमण्डले ।
शर्करासवसंयुक्तैर्भक्तैर्दुग्धैः सपायसैः ॥ १९५ ॥
अपूपापिष्टसंयुक्तैर्नैवेद्यैश्च यथोचितैः ।
निवेदितं च यद्द्रव्यं भोक्तव्यं च विधानतः ॥ १९६ ॥
तन्न चेद् भुज्यते मोहाद् भोक्तुं नेच्छन्ति देवताः ।
अनेनैव विधानेन योऽर्चयेत् परमेश्वरीम् ॥ १९७ ॥
स भूमिवलये देवि साक्षादीशो न संशयः ।
महाशङ्खेन देवेशि सर्वं कार्यं जपादिकम् ॥ १९८ ॥
कुलसर्वस्वकस्यैवं प्रभावो वर्णितो मया ।
न शक्यते समाख्यातुं वर्षकोटिशतैरपि ॥ १९९ ॥
किञ्चिद् मया च चापल्यात् कथितं परमेश्वरि ।
जन्मान्तरसहस्रेण वर्णितुं नैव शक्यते ॥ २०० ॥
कुलीनाय प्रदातव्यं ताराभक्तिपराय च ।
अन्यभक्ताय नो देयं वैष्णवाय विशेषतः ॥ २०१ ॥
कुलीनाय महेच्छाय भक्तिश्रद्धापराय च ।
महात्मने सदा देयं परीक्षितगुणाय च ॥ २०२ ॥

---

१ 'लिखेत् ततः' ख. पाठः । २ 'अरि' ख. पाठः ।

नासक्ताय प्रदातव्यं पश्यन्तरपराय च ।
न देयं देवदेवेशि गोप्यं सर्वागमेषु च ॥ २०३ ॥
पूजाजपविहीनाय स्त्रीसुरानिन्दकाय च ।
न स्तवं दर्शयेत् क्वापि संदर्श्य शिवहा भवेत् ॥ २०४ ॥
पठनीयं सदा देवि सर्वावस्थासु सर्वदा ।

यः स्तोत्रं कुलनायिके प्रतिदिनं भक्त्या पठेद् मानवः
स स्याद्वित्तचयैर्धनेश्वरसमो विद्यामदैर्वाक्पतिः ।
सौन्दर्येण च मूर्तिमान् मनसिजः कीर्त्या च नारायणः
शक्त्या शङ्कर एव सौख्यविभवैर्भूमेः पतिर्नान्यथा ।२०५।

इति ते कथितं गुह्यं तारानामसहस्रकम् ।
अस्मात् परतरं स्तोत्रं नास्ति तन्त्रेषु निश्चयः ॥ २०६ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (तारासहस्रनामनिरूपणं) अष्टादशः पटलः ॥ १८ ॥

अथ

एकोनविंशः पटलः ।



श्रीभैरव उवाच ।
अथ वक्ष्ये महेशानि कवचं परमाद्भुतम् ।
यज्ज्ञात्वा साधकाः सर्वे अवश्यं मुक्तिमाप्नुयुः ॥ १ ॥

१ 'शौर्य'। 'सर्व' ख. पाठः ।

श्रूयतां परमं गुह्यं कवचं मन्मुखोदितम् ।
जपाद्धि सर्वकल्याणं जायते नात्र संशयः ॥ २ ॥
अप्रकाश्यं महादेवि तव स्नेहात् प्रकाशितम् ।
उद्धृतं सारभूतानां सारात् सारतरं परम् ॥ ३ ॥
कवचं धारयेद् यस्तु पठेद् वा भक्तिभावतः ।
स शिवः स च विघ्नेशः स च योगी न संशयः ॥ ४ ॥
कवचेन विना देवि योऽर्चयेत् तारिणीं पराम् ।
कल्पकोटिशतेनापि न सिद्धिर्जायते प्रिये ॥ ५ ॥
ब्रह्मविष्णुशिवानां च बीजं रक्षतु मूलकम् ।
तदेव शक्तिमूलं च लिङ्गं रक्षतु यत्नतः ॥ ६ ॥
मणिपूरं सदा पातु वधूबीजमशेषतः ।
अनाहतं वर्मबीजं पातु मे सर्वसर्वतः ॥ ७ ॥
अस्त्रादि सर्वदा पातु विशुद्धं कण्ठदेशकम् ।
शेषं हि पातु मे नित्यमाज्ञास्थानं द्विपत्रकम् ॥ ८ ॥
शीर्षं पातु सदा तारा जटा पातु सदाननम् ।
नीलासरस्वती पातु हृदयं मे सदा पुनः ॥ ९ ॥
मूलाधारं सदा पातु महानीलसरस्वती ।
अक्षोभ्यः पातु सर्वाङ्गं बृहती पातु भालकम् ॥ १० ॥
उग्रतारा देवता मे शङ्खं रक्षतु सर्वदा ।
कर्णौ (तु)मे सदा पातु ह्रींबीजं तदशेषतः ॥ ११ ॥
स्तनद्वयं सदा पातु हूंशक्तिर्विघ्नघातकः ।
रसनां मे सदा पातु लक्ष्मीर्देवी च शाश्वती ॥ १२ ॥
रसनाग्रं सदा पातु सरस्वती प्रयत्नतः ।
रतिः पातु सदा बीजं प्रीतिर्मे वदनं सदा ॥ १३ ॥

कीर्तिः कीर्तिं सदा पातु शान्तिः शान्तिं सदावतु ।
पुष्टिर्मे पातु पुष्टिं च तुष्टिस्तुष्टिं सदावतु ॥ १४ ॥
वैरोचनः सदा पातु शङ्खं च शङ्खपाण्डुरः ।
पाण्डुरो मे सदा गुह्यं पातु नित्यं च सर्वशः ॥ १५ ॥
पद्मनाभः सदा पातु नाभिं मे दशपत्रिकाम् ।
असिताङ्गः पातु लिङ्गं नामकः पातु कर्णकौ ॥ १६ ॥
मामकः पातु मे बाहू हस्तौ पातु महेश्वरी ।
तारा[1] मे पातु सततं पृष्ठं पद्मान्तको मम ॥ १७ ॥
पार्श्वे मे च सदा पा(तु?तां)यमान्तकवदान्तकौ ।
चरणौ मे सदा पातां विघ्नान्तनरकान्तकौ ॥ १८ ॥
तारा मे पातु सततं अष्टाङ्गं परमेश्वरी ।
इतीदं कवचं देवि कथितं मन्मुखोदितम् ॥ १९ ॥
प्रमादात् परमेशानि न प्रकाश्यं कदाचन ।
योगिनीभिस्तदा हन्यात् स्वयं च वधकारिणी ॥ २० ॥
यदि भाग्यवशाद् देवि लब्धं साधकसत्तमैः ।
तदा तस्य महासिद्धिर्जायते देवि निश्चितम् ॥ २१ ॥
निषिद्धेभ्यो न दातव्यं न प्रकाश्यं कदाचन ।
यदि दद्याद् निषिद्धेभ्यो तदा मृत्युमवाप्नुयात् ॥ २२ ॥
दद्यात् शान्ताय शिष्याय तन्त्रमन्त्रयुताय च ।
गुरुभक्तियुतायैव तत्र सिद्धिरनुत्तमा ॥ २३ ॥
रहस्यं कथितं सर्वमनन्तफलदायकम् ।
गोप्तव्यं परमेशानि न प्रकाश्यं कदाचन ॥ २४ ॥
कवचेन विना देवि योऽर्चयेत् तारिणीं शिवाम् ।
तमश्नाति महोग्रा सा योगिनीभिः सुनिश्चितम् ॥ २५ ॥

---
१ 'तारको' ख. पाठः ।

इति ते कथितं गुह्यं कवचं देवि दुर्लभम् ।
अथ वक्ष्ये महेशानि गोपनीयं प्रयत्नतः ॥ २६ ॥
गुप्तमन्त्रं गुप्तजापं शृणुष्व क(म)लानने ।
महाशक्तिं समुद्धृत्य मातङ्गीं परमेश्वरीम् ॥ २७ ॥
वह्निबीजं महेशानि बीजत्रयमुदाहृतम् ।
बीजत्रयात्मकं मन्त्रं सर्वसारस्वतप्रदम् ॥ २८ ॥
एकादशसहस्रं तु पुरश्चरणमिष्यते ।
होमयेत् तद्दशांशेन दशांशेनैव तर्पणम् ॥ २९ ॥
अभिषेकं दशांशेन भोजयेद् ब्राह्मणान् दश ।
मधूनि पायसं चैव महाज्यं च महेश्वरि ॥ ३० ॥
जुहुयाद् भक्तिभावेन सर्वतन्त्रेषु गोपितम् ।
अनेन मन्त्रराजेन साधयेत् तारिणीं शुभाम् ॥ ३१ ॥
ततः सिद्धो महादेवि भवत्येव महेश्वरि ।
युवतीयोनिदेशे तु हस्तमारोप्य सुन्दरि ॥ ३२ ॥
उत्तरास्यो महेशानि भूत्वा परमसुन्दरीम् ।
तारिणीं भावयेद् देवि मनसा काममोहिनीम् ॥ ३३ ॥
संभाव्य परमेशानि योनिमध्ये महेश्वरि ।
तत्र मुखं समानीय जपेदष्टोत्तरं शतम् ॥ ३४ ॥
सिद्धमन्त्री महेशानि जायते नात्र संशयः ।
पञ्चदिनप्रयोगेन कुबेर इव जायते ॥ ३५ ॥
सर्वैश्वर्ययुतो भूत्वा विहरेत् क्षितिमण्डले ।
अष्टोत्तरशतं जप्यं स्तनमर्दनपूर्वकम् ॥ ३६ ॥
क्षिपेत् लिङ्गं योनिगर्ते लघु शीर्षे च मस्तकम् ।
घाताघातेन देवेशि शुक्रमुत्सार्य सुन्दरि ॥ ३७ ॥

वामहस्ते तदाधाय तिलकं कारयेद् यदि ।
सर्वसंपत्तिमान् भूत्वा मोदते पृथिवीतले ॥ ३८ ॥
राजानोऽपि च दासत्वं भजन्ते किं परे जनाः ।
तस्य पादपद्मद्वन्द्वं रा(ज्ञः।ज्ञां)किरीटभूषणम् ॥ ३९ ॥
सभायां जायते देवि बृहस्पतिरिवापरः ।
इति ते कथितं गुप्तमन्त्रजापं महाधनम् ॥ ४० ॥
मन्त्रराजं महादेवि कथितं नगनन्दिनि ।
गोपनीयं पशोरग्रे सिद्धमन्त्रं सदा शिवे ॥ ४१ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे (ताराकवच-गुप्तमन्त्रनिरूपणं) एकोनविंशः पटलः ॥ १९ ॥

अथ

## विंशः पटलः ।



श्रीदेव्युवाच ।

सर्वं संसूचितं देव नाम्नां शतं महेश्वर ।
यैः शतैर्महादेव मयि नात्र प्रकाशितम् ॥ १ ॥
पठित्वा परमेशान हठात् सिद्ध्यति साधकः ।
नाम्नां शतं महादेव कथयस्व समासतः ॥ २ ॥

श्रीभैरव उवाच ।

शृणु देवि प्रवच्यामि भक्तानां हितकारकम् ।
यज्ज्ञात्वा साधकाः सर्वे जीवन्मुक्तिमुपागताः ॥ ३ ॥
कृतार्थास्ते हि विस्तीर्णा यान्ति देवीपुरे स्वयम् ।
नाम्नां शतं प्रवच्यामि जपात् स(ा)र्वज्ञदायकम् ॥ ४ ॥
नाम्नां सहस्रं संत्यज्य नाम्नां शतं पठेत् सुधीः ।
कलौ नास्ति महेशानि कलौ नान्या गतिर्भवेत् ॥ ५ ॥
शृणु साध्वि वरारोहे शतं नाम्नां पुरातनम् ।
सर्वसिद्धिकरं पुंसां साधकानां सुखप्रदम् ॥ ६ ॥
तारिणी तारसंयोगा महातारस्वरूपिणी ।
तारकप्राणहर्त्री च तारानन्दस्वरूपिणी ॥ ७ ॥
महानीला महेशानी महानीलसरस्वती ।
उग्रतारा सती साध्वी भवानी भवमोचिनी ॥ ८ ॥
महाशङ्करता भीमा शाङ्करी शङ्करप्रिया ।
महादानरता चण्डी चण्डासुरविनाशिनी ॥ ९ ॥
चन्द्रवद्रूपवदना चारुचन्द्रमहोज्ज्वला ।
एकजटा कुरङ्गाक्षी वरदाभयदायिनी ॥ १० ॥
महाकाली महादेवी गुह्यकाली वरप्रदा ।
महाकालरता साध्वी महैश्वर्यप्रदायिनी ॥ ११ ॥
मुक्तिदा स्वर्गदा सौम्या सौम्यरूपा सुरारिहा ।
शठविज्ञा महानादा कमला वगलामुखी ॥ १२ ॥
महामुक्तिप्रदा काली कालरात्रिस्वरूपिणी ।
सरस्वती सरिच्छ्रेष्ठा स्वर्गङ्गा स्वर्गवासिनी ॥ १३ ॥
हिमालयसुता कन्या कन्यारूपविलासिनी ।
शवोपरिसमासीना मुण्डमालाविभूषिता ॥ १४ ॥

दिगम्बरा पतिरता विपरीतरतातुरा ।
रजस्वला रजःप्रीता स्वयम्भूकुसुमप्रिया ॥ १५ ॥
स्वयम्भूकुसुमप्राणा स्वयम्भूकुसुमोत्सुका ।
शिवप्राणा शिवरता शिवदात्री शिवासना ॥ १६ ॥
अट्टहासा घोररूपा नित्यानन्दस्वरूपिणी ।
मेघवर्णा किशोरी च युवतीस्तनकुङ्कुमा ॥ १७ ॥
खर्वा खर्वजनप्रीता मणिभूषितमण्डना ।
किङ्किणीशब्दसंयुक्ता नृत्यन्ती रक्तलोचना ॥ १८ ॥
कृशाङ्गी कुसरप्रीता शरासनगतोत्सुका ।
कपालखर्परधरा पञ्चाशन्मुण्डमालिका ॥ १९ ॥
हव्यकव्यप्रदा तुष्टिः पुष्टिश्चैव वराङ्गना ।
शान्तिः क्षान्तिर्मनो बुद्धिः सर्वबीजस्वरूपिणी ॥ २० ॥
उग्रापत्तारिणी तीर्णा निस्तीर्णगुणवृन्दका ।
रमेशी रमणी रम्या रामानन्दस्वरूपिणी ॥ २१ ॥
रजनीकरसंपूर्णा रक्तोत्पलविलोचना (१००) ।
इति ते कथितं दिव्यं शतं नाम्नां महेश्वरि ॥ २२ ॥
प्रपठेद् भक्तिभावेन तारिण्यास्तारणक्षमम् ।
सर्वासुरमहानादस्तूयमानमनुत्तमम् ॥ २३ ॥
षण्मासाद् महदैश्वर्यं लभते परमेश्वरि ।
भूमिकामेन जप्तव्यं वत्सरात्तां लभेत् प्रिये ॥ २४ ॥
धनार्थी प्राप्नुयादर्थं मोक्षार्थी मोक्षमाप्नुयात् ।
दारार्थी प्राप्नुयाद् दारान् सर्वागम(पुरोऽप्रचो)दितान् ॥ २५ ॥
अष्टम्यां च शतावृत्त्या प्रपठेद् यदि मानवः ।
सत्यं सिद्ध्यति देवेशि संशयो नास्ति कश्चन ॥ २६ ॥
इति सत्यं पुनः सत्यं सत्यं सत्यं महेश्वरि ।

अस्मात् परतरं नास्ति स्तोत्रमध्ये न संशयः ॥ २७ ॥
नाम्नां शतं पठेद् मन्त्रं संजप्य भक्तिभावतः ।
प्रत्यहं प्रपठेद् देवि यदीच्छेत् शुभमात्मनः ॥ २८ ॥
इदानीं कथयिष्यामि विद्योत्पत्तिं वरानने ।
येन विज्ञानमात्रेण विजयी भुवि जायते ॥ २९ ॥
योनिबीजत्रिरावृत्त्या मध्यरात्रौ वरानने ।
अभिमन्त्र्य जलं स्निग्धं अष्टोत्तरशतेन च ॥ ३० ॥
तज्जलं तु पिबेद् देवि षण्मासं जपते यदि ।
सर्वविद्यामयो भूत्वा मोदते पृथिवीतले ॥ ३१ ॥
शक्तिरूपां महादेवीं शृणु हे नगनन्दिनि ।
वैष्णवः शैवमार्गो वा शाक्तो वा गाणपोऽपि वा ॥ ३२ ॥
तथापि शक्तेराधिक्यं शृणु भैरवसुन्दरि ।
सच्चिदानन्दरूपाच्च सकलात् परमेश्वरात् ॥ ३३ ॥
शक्तिरासीत् ततो नादो नादाद् बिन्दुस्ततः परम् ।
अथ बिन्द्वात्मनः कालरूपबिन्दुकलात्मनः ॥ ३४ ॥
जायते च जगत्सर्वं सस्थावरचरात्मकम् ।
श्रोतव्यः स च मन्तव्यो निध्यातव्यः स एव हि ॥ ३५ ॥
साक्षात्कार्यश्च देवेशि आगमैर्विविधैः शिवे ।
श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यो मननादिभिः ॥ ३६ ॥
उपपत्तिभिरेवायं ध्यातव्यो गुरुदेशतः ।
तदा स एव सर्वात्मा प्रत्यक्षो भवति क्षणात् ॥ ३७ ॥
तस्मिन् देवेशि प्रत्यक्षे शृणुष्व परमेश्वरि ।
भावैर्बहुविधैर्देवि भावस्तत्रापि नीयते ॥ ३८ ॥
भक्ष्येभ्यो नानाघासेभ्यो गवि चैको यथा रसः ।
स(तु)दुग्धाख्यसंयोगे नानात्वं लभते प्रिये ॥ ३९ ॥

तृणेन जायते देवि रसस्तस्मात् परो रसः ।
तस्मात् दधि ततो हव्यं तस्मादपि रसोदयः ॥ ४० ॥
स एव कारणं तत्र तत्कार्यं स च लक्ष्यते ।
दृश्यते च महादे(वीवि)न कार्यं न च कारणम् ॥ ४१ ॥
तथैवायं स एवात्मा नानाविग्रहयोनिषु ।
जायते च ततो जातः कालभेदो हि भाव्यते ॥ ४२ ॥
न जातः स मृतो बद्धः स मुक्तः स सुखी पुमान् ।
स वृद्धः स च विद्वांश्च न स्त्री पुमान् नपुंसकः ॥ ४३ ॥
नानाभ्याससमायोगादात्मना जायते शिवे ।
एक एव स एवात्मा सर्वरूपः सनातनः ॥ ४४ ॥
अव्यक्तश्च स च व्यक्तः प्रकृत्या ज्ञायते ध्रुवम् ।
तस्मात् प्रकृतियोगेन विना न ज्ञायते क्वचित् ॥ ४५ ॥
विना घटत्वयोगेन न प्रत्यक्षो यथा घटः ।
इतराद् भिद्यमानोऽपि स भेदमुपगच्छति ॥ ४६ ॥
मां विना पुरुषे भेदो न च याति कथञ्चन ।
न प्रयोगैर्न च ज्ञानैर्न श्रुत्या न गुरुक्रमैः ॥ ४७ ॥
न स्नानैस्तर्पणैर्वापि नच (ज्ञादा)नैः कदाचन ।
प्रकृत्या ज्ञायते ह्यात्मा प्रकृत्या लुप्यते पुमान् ॥ ४८ ॥
प्रकृत्याधिष्ठितं सर्वं प्रकृत्या वञ्चितं जगत् ।
प्रकृत्या भेदमाप्नोति प्रकृत्याभेदमाप्नुयात् ॥ ४९ ॥
नरस्तु प्रकृतिर्नैव न पुमान् परमेश्वरः ।
इति ते कथितं तत्त्वं सर्वसारमनोरमम् ॥ ५० ॥



इति श्रीबृहन्नीलतन्त्रे भैरवभैरवीसंवादे( ताराशतनाम–तत्त्वसारनिरूपणं ) विंशः पटलः ॥ २० ॥

अथ

## एकविंशः पटलः ।

---

(श्रीभैरव उवाच ।)

अथ वक्ष्ये महेशानि तत्त्वसारं पुरातनम् ।
येन विज्ञानमात्रेण कुबेर इव जायते ॥ १ ॥
ताम्रसीसकमेतत्तु पित्तलं चापि यत्नतः ।
चतुर्हस्तप्रमाणं हि गर्त्तं कृत्वा तु साधकः ॥ २ ॥
सरलं भस्म कुर्याच्च विवर्जाङ्गारसंयुतम् ।
करीषमर्धसं(युक्तं?शुष्कं)ताम्रस्योपरि पूरितम् ॥ ३ ॥
तापयेत् परमेशानि दिनानि सप्त चैवहि ।
ततः प(रे?रं)महेशानि उत्तोल्य यत्नतः शिवे ॥ ४ ॥
पात्रे लोहमये देवि तमादाय महेश्वरि ।
वि(वज?वर्जा)ङ्गारजैर्देवि अलातैस्तापयेद् दृढम् ॥ ५ ॥
द्रवीभूतं तथा ताम्रं येन जायेत सुन्दरि ।
तदर्धं च रसं तत्र दद्यात् प्रयतमानसः ॥ ६ ॥
विजावरसकेनैव अटरूपरसेन च ।
सिंहिकारसकेनाथ युक्तं कुर्याद् महेश्वरि ॥ ७ ॥
ततश्च स्वर्णं जायेत सत्यं सुरगणार्चिते ।
मूलमन्त्रस्य जाप्येन सिद्ध्यत्येव न संशयः ॥ ८ ॥
सहस्रदशजापेन सिद्ध्यत्येव न संशयः ।
पूर्वोक्तेन रसेनैव शुद्धसूतेन वा पुनः ॥ ९ ॥

संहृत्य तत्र दद्याच्च सीसकं रूप्यतां व्रजेत् ।
इति ते कथितं सर्वं सर्वसारस्वतप्रदम् ॥ १० ॥
प्रयोगार्हो भवेद् देवि सत्यं सत्यं वरानने ।
इदानीं शृणु चार्वङ्गि सूतभस्म तथैव च ॥ ११ ॥
येन विज्ञानमात्रेण मंत्रसिद्धिर्भवेत् प्रिये ।
सार्धहस्तप्रमाणेन गर्तं कृत्वा तु देशिकः ॥ १२ ॥
हरिद्रागोमयेनाथ लेपयेत् परमेश्वरि ।
ततस्तु गजमूत्रेण भस्म कुर्याद् यथाविधि ॥ १३ ॥
वैजयन्त्याश्च मूलेन तथा सिद्धरसेन च ।
करीषकेण देवेशि भस्मीकुर्याद् विधानतः ॥ १४ ॥
शुद्धसूतं समादाय मङ्गले वासरे निशि ।
ऊर्ध्वाधो लवणं दत्त्वा भस्मीभवति तत्क्षणात् ॥ १५ ॥
अश्वत्थपल्लवेनैव संयुक्तं परमेश्वरि ।
सूतभस्म भवत्येव परेशि नात्र संशयः ॥ १६ ॥
अश्वदन्तेन देवेशि वाजिमारेण चैव हि ।
संयुक्तसूतं तत्रत्यं भस्मीभवति तत्क्षणात् ॥ १७ ॥
धातुना सह युक्तं तद् बद्धीभवति सुन्दरि ।
पातालरसकेनैव भवेच्च स्वर्णमुत्तमम् ॥ १८ ॥
आदौ च गुलिकां बद्ध्वा पश्चाद् रसेन ताडयेत् ।
ततो बद्धीभवत्येव सत्यं गुरुगणार्चिते ॥ १९ ॥
त्रिरात्रस्य विधानेन जपं कुर्याच्छुचिस्मिते ।
ततः प्रयोगो देवेशि सिद्धो नास्त्यत्र संशयः ॥ २० ॥
भावनारससंपन्नो भवेद् योगी महाकविः ।
भावस्य निर्णयं देवि कथितमपि शोभने ॥ २१ ॥

भावस्तु त्रिविधो देवि दिव्यवीरपशुक्रमात् ।
गुरवस्तु त्रिधा ज्ञेयास्तथैव मन्त्रदेवताः ॥ २२ ॥
आद्यो भावो महादेवि श्रेयान् सर्वागमेषु च ।
द्वितीयो मध्यमः प्रोक्तस्तृतीयः सर्वनिन्दितः ॥ २३ ॥
बहुजापात् तथा होमात् कायक्लेशादिविस्तरैः ।
न भावेन विना देवि मन्त्रविद्या फलप्रदा ॥ २४ ॥
किं वीरसाधनैर्लक्षैः किं वा कृष्टिकुलाकुलैः ।
किं पीठपूजनेनैव किं कन्याभोजनादिभिः ॥ २५ ॥
स्वयोषित्प्रीतिदानेन किं परेषां तथैव च ।
किं जितेन्द्रियभावेन किं कुलाचारकर्मणा ॥ २६ ॥
यदि भावविशुद्धात्मा न स्यात् कुलपरायणः ।
भावेन लभते मुक्तिं भावेन कुलवर्द्धनम् ॥ २७ ॥
भावेन गोत्रवृद्धिः स्याद् भावेन कुलसाधनम् ।
किं न्यासविस्तरेणैव किं भूतशुद्धिविस्तरैः ॥ २८ ॥
किं तथा पूजनेनैव यदि भावो न जायते ।
शेषभावो महादे(व?वि)सर्वकर्मसुखावहः ॥ २९ ॥
तेन भावेन देवेशि पूजयेत् परमेश्वरीम् ।
विना हेतुकमासाद्य क्षोभयुक्तो महेश्वरः ॥ ३० ॥
यत्र कुत्र कुजे वारे श्मशानगमने कृते ।
पूजाफलं लभेत् तत्र सप्तवासरसंमितम् ॥ ३१ ॥
चतुर्दश्यां गते तत्र पत्तपुण्यफलं लभेत् ।
नागते नार्चिते स्थाने पशुरेव न संशयः ॥ ३२ ॥
नान्यः स्यादधिको देव इति चिन्तापरायणः ।
साधके क्षोभमापन्ने मम क्षोभः प्रजायते ॥ ३३ ॥

तस्माद् यत्नाद् भोगयुतो भवेद् वीरवरः सदा ।
भोगेन मोक्षमाप्नोति भोगेन कुलसुन्दरीम् ॥ ३४ ॥
विना हेतुकमासाद्य क्षोभयुक्तो महेश्वरः ।
न पूजां मानसीं कुर्याद् न ध्यानं नच चिन्तनम् ॥ ३५ ॥
यद्यद् वदति निद्राति यत्करोति यदर्चति ।
तत्सर्वं कुलरूपं तु ध्यात्वैवं विहरेत् सुधीः ॥ ३६ ॥
तस्माद् भुक्त्वा च पीत्वा च पूजयेत् परमेश्वरीम् ।
न चैव श्रुतिदोषोऽत्र नापराधादिदूषणम् ॥ ३७ ॥
एकाकी निर्जने देशे श्मशाने पर्वते वने ।
शून्यागारे नदीतीरे निःशङ्को विहरेत् सदा ॥ ३८ ॥
वीराणां जपकालस्तु सर्वकालः प्रशस्यते ।
सर्वदेशे सर्वपीठे कर्तव्यं कुलतोषणम् ॥ ३९ ॥
इति विज्ञाय देवेशि सर्वं कुर्याद् वरानने ।
बहुनात्र किमुक्तेन किमन्यत् कथयामि ते ॥ ४० ॥



इति श्रीबृहन्नीलतन्त्रे भैरवीभैरवसंवादे (रसायन-भावनिरूपणं) एकविंशः पटलः ॥ २१ ॥

अथ

## द्वाविंशः पटलः ।



श्रीदेव्युवाच ।

पूर्वं हि सूचितं देव कालीनामसहस्रकम् ।
तद्वदस्व महादेव यदि स्नेहोऽस्ति मां प्रति ॥ १ ॥

श्रीभैरव उवाच ।

तन्त्रेऽस्मिन् परमेशानि कालीनामसहस्रकम् ।
शृणुष्वैकमना देवि भक्तानां प्रीतिवर्द्धनम् ॥ २ ॥

(ॐ अस्याः श्रीकालीदेव्याः मन्त्रसहस्रनामस्तोत्रस्य महाकालभैरव ऋषिः अनुष्टुप् छन्दः श्रीकाली देवता क्रीँ बीजं हूँ शक्तिः ह्रीँ कीलकं धर्मार्थकाममोक्षार्थे विनियोगः) । न्यासादि,

कालिका कामदा कुल्ला भद्रकाली गणेश्वरी ।
भैरवी भैरवप्रीता भवानी भवमोचिनी ॥ ३ ॥
कालरात्रिर्महारात्रिर्मोहरात्रिश्च मोहिनी ।
महाकालरता सूक्ष्मा कौलव्रतपरायणा ॥ ४ ॥
कोमलाङ्गी करालाङ्गी कमनीया वराङ्गना ।
गन्धचन्दनदिग्धाङ्गी सती साध्वी पतिव्रता ॥ ५ ॥
काकिनी वर्णरूपा च महाकालकुटुम्बिनी ।
कामहर्त्री कामकला कामविद्या महोदया ॥ ६ ॥
कान्तरूपा महालक्ष्मीर्महाकालस्वरूपिणी ।
कुलीना कुलसर्वस्वा कुलवर्त्मप्रदर्शिका ॥ ७ ॥

कुलरूपा चकोराक्षी श्रीदुर्गा दुर्गनाशिनी ।
कन्या कुमारी गौरी तु कृष्णदेहा महामनाः ॥ ८ ॥
कृष्णाङ्गी नीलदेहा च पिङ्गकेशी कृशोदरी ।
पिङ्गाक्षी कमलप्रीता काली कालपराक्रमा ॥ ९ ॥
कलानाथप्रिया देवी कुलकान्ताऽपराजिता ।
उग्रतारा महोग्रा च तथा चैकजटा शिवा ॥ १० ॥
नीला घना बलाका च कालदात्री कलात्मिका ।
नारायणप्रिया सूक्ष्मा वरदा भक्तवत्सला ॥ ११ ॥
वरारोहा महाबाणा किशोरी युवती सती ।
दीर्घाङ्गी दीर्घकेशा च नृमुण्डधारिणी तथा ॥ १२ ॥
मालिनी नरमुण्डाली शवमुण्डास्थिधारिणी ।
रक्तनेत्रा विशालाक्षी सिन्दूरभूषणा मही ॥ १३ ॥
घोररात्रिर्महारात्रिर्घोरान्तकविनाशिनी ।
नारसिंही महारौद्री नीलरूपा वृषासना ॥ १४ ॥
विलोचना विरूपाक्षी रक्तोत्पलविलोचना ।
पूर्णेन्दुवदना भीमा प्रसन्नवदना तथा (१००) ॥ १५ ॥
पद्मनेत्रा विशालाक्षी शरज्ज्योत्स्नासमाकुला ।
प्रफुल्लपुण्डरीकाभलोचना भयनाशिनी ॥ १६ ॥
अट्टहासा महोच्छ्वासा महाविघ्नविनाशिनी ।
कोटराक्षी कृशग्रीवा कुलतीर्थप्रस(ा)धिनी ॥ १७ ॥
कुलगर्तप्रसन्नास्या महती कुलपूजिका ।
मधुवाक्यामृतरसा चण्डरूपाति(रोषि)णी ॥ १८ ॥
वेगदर्पा विशालेन्द्री प्रचण्डचण्डिका तथा ।
चण्डिका कालवदना सुतीक्ष्णनासिका तथा ॥ १९ ॥

दीर्घकेशी सुकेशी च कपिलाङ्गी महारुणा ।
प्रेतभूषणसंप्रीता प्रेतदोर्दण्डघण्टिका ॥ २० ॥
शङ्खिनी शङ्खमुद्रा च शङ्खध्वनिनिनादिनी ।
श्मशानवासिनी पूर्णा पूर्णेन्दुवदना शिवा ॥ २१ ॥
शिवप्रीता शिवरता शिवासनसमाश्रया ।
पुण्यालया महापुण्या पुण्यदा पुण्यवल्लभा ॥ २२ ॥
नरमुण्डधरा भीमा भीमासुरविनाशिनी ।
दक्षिणा दक्षिणाप्रीता नागयज्ञोपवीतिनी ॥ २३ ॥
दिगम्बरी महाकाली शान्ता पीनोन्नतस्तनी ।
घोरासना घोररूपा सृक्प्रान्ते-रक्तधारिका ॥ २४ ॥
महाध्वनिः शिवासक्ता महाशब्दा महोदरी ।
कामातुरा कामसक्ता प्रमत्ता शक्तभावना ॥ २५ ॥
समुद्रनिलया देवी महामत्तजनप्रिया ।
कर्षिता कर्षणप्रीता सर्वाकर्षणकारिणी ॥ २६ ॥
वाद्यप्रीता महागीतरक्ता प्रेतनिवासिनी ।
नरमुण्डस्रजा गीता मालिनी माल्यभूषिता ॥ २७ ॥
चतुर्भुजा महारौद्री दशहस्ता प्रियातुरा ।
जगन्माता जगद्धात्री जगती मुक्तिदा परा ॥ २८ ॥
जगद्धात्री जगत्त्रात्री जगदानन्दकारिणी ।
जगज्जीवमयी हैमवती माया महाकचा ॥ २९ ॥
नागाङ्गी संहृताङ्गी च नागशय्यासमागता ।
कालरात्रिर्दारुणा च चन्द्रसूर्यप्रतापिनी (२००) ॥ ३० ॥
नागेन्द्रनन्दिनी देवकन्या च श्रीमनोरमा ।
विद्याधरी वेदविद्या यक्षिणी शिवमोहिनी ॥ ३१ ॥

राक्षसी डाकिनी देवमयी सर्वजगज्जया ।
श्रुतिरूपा तथाग्नेयी महामुक्तिर्जनेश्वरी ॥ ३२ ॥
पतिव्रता पतिरता पतिभक्तिपरायणा ।
सिद्धिदा सिद्धिसंदात्री तथा सिद्धजनप्रिया ॥ ३३ ॥
कर्त्तिहस्ता शिवारूढा शिवरूपा शवासना ।
तमिस्रा तामसी विज्ञा महामेघस्वरूपिणी ॥ ३४ ॥
चारुचित्रा चारुवर्णा चारुकेशसमाकुला ।
चार्वङ्गी चञ्चला लोला चीनाचारपरायणा ॥ ३५ ॥
चीनाचारपरा लज्जावती जीवप्रदाऽनघा ।
सरस्वती तथा लक्ष्मीर्महानीलसरस्वती ॥ ३६ ॥
गरिष्ठा धर्मनिरता धर्माधर्मविनाशिनी ।
विशिष्टा महती मान्या तथा सौम्यजनप्रिया ॥ ३७ ॥
भयदात्री भयरता भयानकजनप्रिया ।
वाक्यरूपा छिन्नमस्ता छिन्नासुरप्रिया सदा ॥ ३८ ॥
ऋग्वेदरूपा सावित्री रागयुक्ता रजस्वला ।
रजःप्रीता रजोरक्ता रजःसंसर्गवर्द्धिनी ॥ ३९ ॥
रजःप्लुता रजःस्फीता रजःकुन्तलशोभिता ।
कुण्डली कुण्डलप्रीता तथा कुण्डलशोभिता ॥ ४० ॥
रेवती रेवतप्रीता रेवा चैरावती शुभा ।
शङ्खिनी चक्रिणी पद्मा महापद्मनिवासिनी ॥ ४१ ॥
पद्मालया महापद्मा पद्मिनी पद्मवल्लभा ।
पद्मप्रिया पद्मरता महापद्मसुशोभिता ॥ ४२ ॥
शूलहस्ता शूलरता शूलिनी शूलसङ्गिका ।
पि(णा?ना)कधारिणी वीणा तथा वीणावती मघा ॥ ४३ ॥

रोहिणी बहुलप्रीता तथा वाहनवर्द्धिता ।
रणप्रीता रणरता रणासुरविनाशिनी ॥ ४४ ॥
रणाग्रवर्तिनी (३००) राणा रणाग्रा रणपण्डिता ।
जटायुक्ता जटापिङ्गा वज्रिणी शूलिनी तथा ॥ ४५ ॥
रतिप्रिया रतिरता रतिभक्ता रतातुरा ।
रतिभीता रतिगता महिषासुरनाशिनी ॥ ४६ ॥
रक्तपा रक्तसंप्रीता रक्ताख्या रक्तशोभिता ।
रक्तरूपा रक्तगता रक्तखर्परधारिणी ॥ ४७ ॥
गलच्छोणितमुण्डाली कण्ठमालाविभूषिता ।
वृषासना वृषरता वृषासनकृताश्रया ॥ ४८ ॥
व्याघ्रचर्मावृता रौद्री व्याघ्रचर्मावली तथा ।
कामाङ्गी परमा प्रीता परासुरनि(वा?रा)सिनी ॥ ४९ ॥
तरुणा तरुणप्राणा तथा तरुणमर्दिनी ।
तरुणप्रेमदा वृद्धा तथा वृद्धप्रिया सती ॥ ५० ॥
स्वप्नावती स्वप्नरता नारसिंही महालया ।
अमोघा रुन्धती रम्या तीक्ष्णा भोगवती सदा ॥ ५१ ॥
मन्दाकिनी मन्दरता महानन्दा वरप्रदा ।
मानदा मानिनी मान्या माननीया मदातुरा ॥ ५२ ॥
मदिरा मदिरोन्मादा मदिराक्षी मदालया ।
सुदीर्घा मध्यमा नन्दा विनतासुरनिर्गता ॥ ५३ ॥
जयप्रदा जयरता दुर्ज(या?ग्या)सुरनाशिनी ।
दुष्टदैत्यनिहन्त्री च दुष्टासुरविनाशिनी ॥ ५४ ॥
सुखदा मोक्षदा मोक्षा महामोक्षप्रदायिनी ।
कीर्तिर्यशस्विनी भूषा भूष्या भूतपतिप्रिया ॥ ५५ ॥

गुणातीता गुणप्रीता गुणरक्ता गुणात्मिका ।
सगुणा निर्गुणा सीता निष्ठा काष्ठा प्रतिष्ठिता ॥ ५६ ॥
धनिष्ठा धनदा धन्या वसुदा सुप्रकाशिनी ।
गुर्वी गुरुतरा धौम्या धौम्यासुरविनाशिनी (४००) ॥ ५७
निष्कामा धनदा कामा सकामा कामजीवना ।
चिन्तामणिः कल्पलता तथा शङ्करवाहिनी ॥ ५८ ॥
शङ्करी शङ्कररता तथा शङ्करमोहिनी ।
भवानी भवदा भव्या भवप्रीता भवालया ॥ ५९ ॥
महादेवप्रिया रम्या रमणी कामसुन्दरी ।
कदलीस्तम्भसंरामा निर्मलासनवासिनी ॥ ६० ॥
माथुरी मथुरा माया तथा सुरभिवर्द्धिनी ।
व्यक्ताव्यक्तानेकरूपा सर्वतीर्थास्पदा शिवा ॥ ६१ ॥
तीर्थरूपा महारूपा तथागस्त्यवधूरपि ।
शिवानी शैवलप्रीता तथा शैवलवासिनी ॥ ६२ ॥
कुन्तला कुन्तलप्रीता तथा कुन्तलशोभिता ।
महाकचा महाबुद्धिर्महामाया महागदा ॥ ६३ ॥
महामेघस्वरूपा च तथा कङ्कणमोहिनी ।
देवपूज्या देवरता युवती सर्वमङ्गला ॥ ६४ ॥
सर्वप्रियङ्करी भोग्या भोगरूपा भगाकृतिः ।
भगप्रीता भगरता भगप्रेमरता सदा ॥ ६५ ॥
भगसंमर्दनप्रीता भगोपरि-निवेशिता ।
भगदत्ता भगाक्रान्ता भगसौभाग्यवर्द्धिनी ॥ ६६ ॥
दक्षकन्या महादक्षा सर्वदक्षा प्रचण्डिका ।
दण्डप्रिया दण्डरता दण्डताडनतत्परा ॥ ६७ ॥

दण्डभीता दण्डगता दण्डसंमर्दने रता ।
सुवेदिदण्डमध्यस्था भूर्भुवःस्वःस्वरूपिणी ॥ ६८ ॥
आद्या दुर्गा जया सूक्ष्मा सूक्ष्मरूपा जयाकृतिः ।
क्षेमङ्करी महाघूर्णा घूर्णनासा वशङ्करी ॥ ६९ ॥
विशालावयवा मेध्या त्रिवलीवलया शुभा ।
मदोन्मत्ता मदरता मत्तासुरविनाशिनी ॥ ७० ॥
मधुकैटभसंहर्त्री निशुम्भासुरमर्दिनी ।
चण्डरूपा महाचण्डी चण्डिका चण्डनायिका ॥ ७१ ॥
चण्डोग्रा चण्डवर्णा प्रचण्डा (५००) चण्डावती शिवा ।
नीलाकारा नीलवर्णा नीलेन्दीवरलोचना ॥ ७२ ॥
खड्गहस्ता च मृद्वङ्गी तथा खर्परधारिणी ।
भीमा च भीमवदना महाभीमा भयानका ॥ ७३ ॥
कल्याणी मङ्गला शुद्धा तथा परमकौतुका ।
परमेष्ठी पररता पर(ा)त्परतरा परा ॥ ७४ ॥
परानन्दस्वरूपा च नित्यानन्दस्वरूपिणी ।
नित्या नित्यप्रिया तन्द्री भवानी भवसुन्दरी ॥ ७५ ॥
त्रैलोक्यमोहिनी सिद्धा तथा सिद्धजनप्रिया ।
भैरवी भैरवप्रीता तथा भैरवमोहिनी ॥ ७६ ॥
मातङ्गी कमला लक्ष्मीः षोडशी विषयातुरा ।
विषमग्ना विषरता विषरक्ता जयद्रथा ॥ ७७ ॥
काकपक्षधरा नित्या सर्वविस्मयकारिणी ।
गदिनी कामिनी खड्गमुण्डमालाविभूषिता ॥ ७८ ॥
योगीश्वरी योगमाता योगानन्दस्वरूपिणी ।
आनन्दभैरवी नन्दा तथा नन्दजनप्रिया ॥ ७९ ॥

नलिनी ललना शुभ्रा शुभ्राननविभूषिता ।
ललज्जिह्वा नीलपदा तथा सु(मु?म)खदक्षिणा ॥ ८० ॥
बलिभक्ता बलिरता बलिभोग्या महारता ।
फलभोग्या फलरसा फलदा श्रीफलप्रिया ॥ ८१ ॥
फलिनी फलसंवज्ञा फलाफलनिवारिणी ।
फलप्रीता फलगता फलसंदानसन्धिनी ॥ ८२ ॥
फलोन्मुखी सर्वसत्त्वा महासत्त्वा च सात्त्विकी ।
सर्वरूपा सर्वरता सर्वसत्त्वनिवासिनी ॥ ८३ ॥
महारूपा महाभागा महामेघस्वरूपिणी ।
भयनासा गणरता गणप्रीता महागतिः ॥ ८४ ॥
सद्गतिः सत्कृतिः स्वक्षा शवासनगता शुभा ।
त्रैलोक्यमोहिनी गङ्गा स्वर्गङ्गा स्वर्गवासिनी ॥ ८५ ॥
महानन्दा सदानन्दा (६००) नित्यानित्यस्वरूपिका ।
सत्यगन्धा सत्यगणा सत्यरूपा महाकृतिः ॥ ८६ ॥
श्मशानभैरवी काली तथा भयविमर्दिनी ।
त्रिपुरा परमेशानी सुन्दरी पुरसुन्दरी ॥ ८७ ॥
त्रिपुरेशी पञ्चदशी पञ्चमी पुरवासिनी ।
महासप्तदशी षष्ठी सप्तमी (चा)ष्टमी तथा ॥ ८८ ॥
नवमी दशमी देवप्रिया चैकादशी शिवा ।
द्वादशी परमा दिव्या नीलरूपा त्रयोदशी ॥ ८९ ॥
चतुर्दशी पौर्णमासी राजराजेश्वरी तथा ।
त्रिपुरा त्रिपुरेशी च तथा त्रिपुरमर्दिनी ॥ ९० ॥
सर्वाङ्गसुन्दरी रक्ता रक्तवस्त्रोपवीतिनी ।
चामरी चामरप्रीता चमरासुरमर्दिनी ॥ ९१ ॥

मनोज्ञा सुन्दरी रम्या हंसी च चारुहासिनी ।
नितम्बिनी नितम्बाढ्या नितम्बगुरुशोभिता ॥ ९२ ॥
पट्टवस्त्रप(रि?री)धाना पट्टवस्त्रधरा–शुभा ।
कर्पूरचन्द्रवदना कुङ्कुमद्रवशोभिता ॥ ९३ ॥
पृथिवी पृथुरूपा सा पार्थिवेन्द्रविनाशिनी ।
रत्नवेदिः सुरेशा च सुरेशी सुरमोहिनी ॥ ९४ ॥
शिरोमणिर्मणिग्रीवा मणिरत्नविभूषिता ।
उर्वशी शमनी काली महाकालस्वरूपिणी ॥ ९५ ॥
सर्वरूपा महासत्त्वा रूपान्तरविलासिनी ।
शिवा शैवा च रुद्राणी तथा शिवनिनादिनी ॥ ९६ ॥
मातङ्गिनी भ्रामरी च तथैवा(ङ्गन?नङ्ग)मेखला ।
योगिनी डाकिनी चैव तथा महेश्वरी–परा ॥ ९७ ॥
अलम्बुषा भवानी च महाविद्यौघसंभृता ।
गृध्ररूपा ब्रह्मयोनिर्महानन्दा महोदया ॥ ९८ ॥
विरूपाक्षा महानादा चण्डरूपा कृताकृतिः ।
वरारोहा महावल्ली महात्रिपुरसुन्दरी ॥ ९९ ॥
भगात्मिका भगाधाररूपिणी भगमालिनी ।
लिङ्गाभिधायिनी देवी (७००) महामाया महास्मृतिः ॥ १०० ॥
महामेधा महाशान्ता शान्तरूपा वरानना ।
लिङ्गमाला लिङ्गभूषा भगमालाविभूषणा ॥ १०१ ॥
भगलिङ्गामृतप्रीता भगलिङ्गामृतात्मिका ।
भगलिङ्गार्चनप्रीता भगलिङ्गस्वरूपिणी ॥ १०२ ॥
स्वयम्भूकुसुमप्रीता स्वयम्भूकुसुमासना ।
स्वयम्भूकुसुमरता लतालिङ्गनतत्परा ॥ १०३ ॥

सुराशना सुराप्रीता सुरासवविमर्दिता ।
सुरापानमहार्तीन्मणा सर्वागमविनिन्दिता ॥ १०४ ॥
कुण्डगोलसदाप्रीता गोलपुष्पसदारतिः ।
कुण्डगोलोद्भवप्रीता कुण्डगोलोद्भवात्मिका ॥ १०५ ॥
स्वयम्भवा शिवा-धात्री पावनी लोकपावनी ।
महालक्ष्मीर्महेशानी महाविष्णुप्रभाविनी ॥ १०६ ॥
विष्णुप्रिया विष्णुरता विष्णुभक्तिपरायणा ।
विष्णोर्वक्षःस्थलस्था च विष्णुरूपा च वैष्णवी ॥ १०७ ॥
अश्विनी भरणी चैव कृत्तिका रोहिणी तथा ।
धृतिर्मेधा तथा तुष्टिः पुष्टिरूपा चिता चितिः ॥ १०८ ॥
चितिरूपा चित्स्वरूपा ज्ञानरूपा सनातनी ।
सर्वविजया गौरी गौरवर्णा शची शिवा ॥ १०९ ॥
भवरूपा भवपरा भवानी भवमोचिनी ।
पुनर्वसुस्तथा पुष्या तेजस्वी सिन्धुवासिनी ॥ ११० ॥
शुक्राशना शुक्रभोगा शुक्रोत्सारणतत्परा ।
शुक्रपूज्या शुक्रवन्द्या शुक्रभोग्या पुलोमजा ॥ १११ ॥
शुक्रार्च्या शुक्रसंतुष्टा सर्वशुक्रविमुक्तिदा ।
शुक्रमूर्त्तिः शुक्रदेहा शुक्राङ्गी शुक्रमोहिनी ॥ ११२ ॥
देवपूज्या देवरता युवती सर्वमङ्गला ।
सर्वप्रियङ्करी भोग्या भोगरूपा ( भो?म )गाकृतिः ॥ ११३ ॥
भगप्रेता भगरता भगप्रेमपरा तथा ।
भगसंमर्दनप्रीता भगोपरि-निवेशिता ॥ ११४ ॥
भगदत्ता भगाक्रान्ता भगसौभाग्यवर्द्धिनी ।
दक्षकन्या महादक्षा सर्वदक्षा प्रचण्डिका (८००) ॥ ११५ ॥

दण्डप्रिया दण्डरता दण्डताडनतत्परा ।
दण्डभीता दण्डगता दण्डसंमर्दने-रता ॥ ११६ ॥
वेदिमण्डलमध्यस्था भूर्भुवःस्वःस्वरूपिणी ।
आद्या-दुर्गा जया सूक्ष्मा सूक्ष्मरूपा जयाकृतिः ॥ ११७ ॥
क्षेमङ्करी महाघूर्णा घूर्णनासा वशङ्करी ।
विशालावयवा मेध्या त्रिवलीवलया-शुभा ॥ ११८ ॥
मद्योन्मत्ता मद्यरता मत्तासुरविलासिनी ।
मधुकैटभसंहन्त्री निशुम्भासुरमर्दिनी ॥ ११६ ॥
चण्डरूपा महाचण्डा चण्डिका चण्डनायिका ।
चण्डोग्रा च चतुर्वर्गा तथा चण्डावती-शिवा ॥ १२० ॥
नीलदेहा नीलवर्णा नीलेन्दीवरलोचना ।
नित्यानित्यप्रिया भद्रा भवानी भवसुन्दरी ॥ १२१ ॥
भैरवी भैरवप्रीता तथा भैरवमोहिनी ।
मातङ्गी कमला लक्ष्मीः षोडशी भीषणातुरा ॥ १२२ ॥
विषमग्ना विषरता विषभक्ष्या जया तथा ।
काकपक्षधरा नित्या सर्वविस्मयकारिणी ॥ १२३ ॥
गदिनी कामिनी खड्गा मुण्डमालाविभूषिता ।
योगेश्वरी योगरता योगानन्दस्वरूपिणी ॥ १२४ ॥
आनन्दभैरवी नन्दा तथानन्दजनप्रिया ।
नलिनी ललना शुभ्रा शुभाननविराजिता ॥ १२५ ॥
ललज्जिह्वा नीलपदा तथा संमुखदक्षिणा ।
बलिभक्ता बलिरता बलिभोग्या महारता ॥ १२६ ॥
फलभोग्या फलरसा फलदात्री फलप्रिया ।
फलिनी फलसंरक्ता फलाफलनिवारिणी ॥ १२७ ॥

फलप्रीता फलगता फलसन्धानसन्धिनी ।
फलोन्मुखी सर्वसत्त्वा महासत्त्वा च सात्त्विका ॥ १२८ ॥
सर्वरूपा सर्वरता सर्वसत्त्वनिवासिनी ।
महारूपा महाभागा महामेघस्वरूपिणी ॥ १२९ ॥
भयनाशा गणरता गणगीता महागतिः ।
सद्गतिः (६००) सत्कृतिः साक्षात्-सदासनगता-शुभा ॥१३०॥
त्रैलोक्यमोहिनी गङ्गा स्वर्गङ्गा स्वर्गवासिनी ।
महानन्दा सदानन्दा नित्या सत्यस्वरूपिणी ॥ १३१ ॥
शुक्रस्नाता शुक्रकरी शुक्रसेव्यातिशुक्रिणी ।
महाशुक्रा शुक्ररता शुक्रसृष्टिविधायिनी ॥ १३२ ॥
सारदा साधकप्राणा साधकप्रेमवर्द्धिनी ।
साधकाभीष्टदा नित्यं साधकप्रेमसेविता ॥ १३३ ॥
साधकप्रेमसर्वस्वा साधकाभक्तरक्तपा ।
मल्लिका मालती जातिः सप्तवर्णा महाकचा ॥ १३४ ॥
सर्वमयी सर्वशुभ्रा गाणपत्यप्रदा तथा ।
गगना गगनप्रीता तथा गगनवासिनी ॥ १३५ ॥
गणनाथप्रिया भव्या भवार्चा सर्वमङ्गला ।
गुह्यकाली भद्रकाली शिवरूपा सतांगतिः ॥ १३६ ॥
सद्भक्ता सत्परा सेतुः सर्वाङ्गसुन्दरी मघा ।
क्षीणोदरी महावेगा वेगानन्दस्वरूपिणी ॥ १३७ ॥
रुधिरा रुधिरप्रीता रुधिरानन्दशोभना ।
पञ्चमी-पञ्चमप्रीता तथा पञ्चमभूषणा ॥ १३८ ॥
पञ्चमीजपसंपन्ना पञ्चमीयजने-रता ।
ककारवर्णरूपा च ककाराक्षररूपिणी ॥ १३९ ॥

मकारपञ्चमप्रीता मकारपञ्चगोचरा ।
ऋववर्णरूपप्रभवा ऋवर्णा सर्वरूपिणी ॥ १४० ॥
(स?श)र्वाणी सर्वनिलया सर्वसारसमुद्भवा ।
सर्वेश्वरी सर्वसारा सर्वे(षां?च्छा) सर्वमोहिनी ॥ १४१ ॥
गणेशजननी दुर्गा महामाया महेश्वरी ।
महेशजननी मोहा विद्या-विद्योतनी विभा ॥ १४२ ॥
स्थिरा च स्थिरचित्ता च सुस्थिरा धर्मरञ्जिनी ।
धर्मरूपा धर्मरता धर्माचरणतत्परा ॥ १४३ ॥
धर्मानुष्ठानसन्दर्भा सर्वसन्दर्भसुन्दरी ।
स्वधा-स्वाहा-वषट्कारा श्रौषट्-वौषट्-स्वधात्मिका ॥ १४४ ॥
ब्राह्मणी ब्रह्मसंबन्धा ब्रह्मस्थाननिवासिनी ।
पद्मयोनिः पद्मसंस्था चतुर्वर्गफलप्रदा ॥ १४५ ॥
चतुर्भुजा शिवयुता शिवलिङ्गप्रवेशिनी (१०००) ।
महाभीमा चारुकेशी गन्धमादनसंस्थिता ॥ १४६ ॥
गन्धर्वपूजिता गन्धा सुगन्धा सुरपूजिता ।
गन्धर्वनिरता-देवी सुरभी सुगन्धा तथा ॥ १४७ ॥
पद्मगन्धा महागन्धा गन्धामोदितदिङ्मुखा ।
कालदिग्धा कालरता महिषासुरमर्दिनी ॥ १४८ ॥
विद्या-विद्यावती चैव विद्येशा विज्ञसंभवा ।
विद्याप्रदा महावाणी महाभैरवरूपिणी ॥ १४९ ॥
भैरवप्रेमनिरता महाकालरता-शुभा ।
माहेश्वरी गजारूढा गजेन्द्रगमना तथा ॥ १५० ॥
यज्ञेन्द्रललना चण्डी गजासनपराश्रया ।
गजेन्द्रमन्दगमना महाविद्या महोज्ज्वला ॥ १५१ ॥

बगला-वाहिनी वृद्धा बाला च बालरूपिणी ।
बालक्रीडारता बाला-बलासुरविनाशिनी ॥ १५२ ॥
बाल्यस्था यौवनस्था च महायौवनसंरता ।
विशिष्टयौवना काली कृष्णदुर्गा सरस्वती ॥ १५३ ॥
कात्यायनी च चामुण्डा चण्डासुरविघातिनी ।
चण्डमुण्डधरा देवी मधुकैटभनाशिनी ॥ १५४ ॥
ब्राह्मी माहेश्वरी चैन्द्री वाराही वैष्णवी तथा ।
रुद्रकाली विशालाक्षी भैरवी कालरूपिणी ॥ १५५ ॥
महामाया महोत्साहा महाचण्डविनाशिनी ।
कुलश्रीः कुलसंकीर्णा कुलगर्भनिवासिनी ॥ १५६ ॥
कुलाङ्गारा कुलयुता कुलकुन्तलसंयुता ।
कुलदर्भग्रहा चैव कुलगर्तप्रदायिनी ॥ १५७ ॥
कुलप्रेमयुता साध्वी शिवप्रीतिः शिवावलिः ।
शिवसक्ता शिवप्राणा महादेवकृतालया ॥ १५८ ॥
महादेवप्रिया कान्ता महादेवमदातुरा ।
मत्ता-मत्तजनप्रेमधात्री विभववर्द्धिनी ॥ १५९ ॥
मदोन्मत्ता महाशुद्धा मत्तप्रेमविभूषिता ।
मत्तप्रमत्तवदना मत्तचुम्बनतत्परा ॥ १६० ॥
मत्तक्रीडातुरा भैमी तथा हैमवती मतिः ।
मदातुरा मदगता विपरीतरतातुरा ॥ १६१ ॥
वित्तप्रदा वित्तरता वित्तवर्धनतत्परा (११००) ।
इति ते कथितं सर्वं कालीनामसहस्रकम् ॥ १६२ ॥
सारात्सारतरं दिव्यं महाविभववर्द्धनम् ।
गाणपत्यप्रदं राज्यप्रदं षट्कर्मसाधकम् ॥ १६३ ॥

यः पठेत् साधको नित्यं स भवेत् संपदां पदम् ।
यः पठेत् पाठयेद्वापि शृणोति श्रावयेदथ ॥ १६४ ॥
न किञ्चिद् दुर्लभं लोके स्तवस्यास्य प्रसादतः ।
ब्रह्महत्या सुरापानं सुवर्णहरणं तथा ॥ १६५ ॥
गुरुदाराभिगमनं यच्चान्यद् दुष्कृतं कृतम् ।
सर्वमेतत्पुनात्येव सत्यं सुरगणार्चिते ॥ १६६ ॥
रजस्वलाभगं दृष्ट्वा पठेत् स्तोत्रमनन्यधीः ।
स शिवः सत्यवादी च भवत्येव न संशयः ॥ १६७ ॥
परदारयुतो भूत्वा पठेत् स्तोत्रं समाहितः ।
सर्वैश्वर्ययुतो भूत्वा महाराजत्वमाप्नुयात् ॥ १६८ ॥
परनिन्दां परद्रोहं परहिंसां न कारयेत् ।
शिवभक्ताय शान्ताय प्रियभक्ताय वा पुनः ॥ १६९ ॥
स्तवं च दर्शयेदेनमन्यथा मृत्युमाप्नुयात् ।
अस्मात् परतरं नास्ति तन्त्रमध्ये सुरेश्वरि ॥ १७० ॥
महाकाली महादेवी तथा नीलसरस्वती ।
न भेदः परमेशानि भेदकृन्नरकं व्रजेत् ॥ १७१ ॥
इदं स्तोत्रं मया दिव्यं तव स्नेहात् प्रकथ्यते ।
उभयोरेवमेकत्वं भेदबुद्ध्या न तां भजेत् ।
स योगी परमेशानि समो मानापमानयोः ॥ १७२ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवपार्वतीसंवादे ( कालीसहस्रनामनिरूपणं ) द्वाविंशः पटलः ॥ २२ ॥

अथ

## त्रयोविंशः पटलः ।



श्रीदेव्युवाच ।

पुरा प्रतिश्रुतं देव क्रीडासक्तो यदा भवान् ।
नाम्नां शतं महाकाल्याः कथयस्व मयि प्रभो ॥ १ ॥

श्रीभैरव उवाच ।

साधु पृष्टं महादेवि अकथ्यं कथयामि ते ।
न प्रकाश्यं वरारोहे स्वयोनिरिव सुन्दरि ॥ २ ॥
प्राणाधिकप्रियतरा भवती मम मोहिनी ।
क्षणमात्रं न जीवामि त्वां विना परमेश्वरि ॥ ३ ॥
यथादर्शेऽमले बिम्बं घृतं दध्यादिसंयुतम् ।
तथाहं जगतामाद्ये त्वयि सर्वत्र गोचरः ॥ ४ ॥
शृणु देवि प्रवक्ष्यामि जपात् सार्वज्ञदायकम् ।
सदाशिव ऋषिः प्रोक्तोऽनुष्टुप् छन्दश्च ईरितः ॥ ५ ॥
देवता भैरवो देवि पुरुषार्थचतुष्टये ।
विनियोगः प्रयोक्तव्यः सर्वकर्मफलप्रदः ॥ ६ ॥
महाकाली जगद्धात्री जगन्माता जगन्मयी ।
जगदम्बा जगत्सारा जगदानन्दकारिणी (१०) ॥ ७ ॥
जगद्विध्वंसिनी गौरी दुःखदारिद्र्यनाशिनी ।
भैरवभाविनी भावानन्ता सारस्वतप्रदा ॥ ८ ॥
चतुर्वर्गप्रदा साध्वी सर्वमङ्गलमङ्गला ।

भद्रकाली (२०) विशालाक्षी कामदात्री कलात्मिका ॥ ६ ॥
नीलवाणी महागौरसर्वाङ्गा सुन्दरी-परा ।
सर्वसंपत्प्रदा भीमनादिनी वरवर्णिनी ॥ १० ॥
वरारोहा (३०) शिवरुहा महिषासुरघातिनी ।
शिवपूज्या शिवप्रीता दानवेन्द्रप्रपूजिता ॥ ११ ॥
सर्वविद्यामयी शर्वसर्वाभीष्टफलप्रदा ।
कोमलाङ्गी विधात्री च विधातृवरदायिनी (४०) ॥ १२ ॥
पूर्णेन्दुवदना नीलमेघवर्णा कपालिनी ।
कुरुकुल्ला विप्रचित्ता कान्तचित्ता मदोन्मदा ॥ १३ ॥
मत्ताङ्गी मदनप्रीता मदाघूर्णितलोचना (५०) ।
मदोत्तीर्णा खर्परासिनरमुण्डविलासिनी ॥ १४ ॥
नरमुण्डस्रजा देवी खड्गहस्ता भयानका ।
अट्टहासयुता पद्मा पद्मरागोपशोभिता ॥ १५ ॥
वराभयप्रदा (६०) काली कालरात्रिस्वरूपिणी ।
स्वधा स्वाहा वषट्कारा शरदिन्दुसमप्रभा ॥ १६ ॥
शरत्ज्योत्स्ना च संह्लादा विपरीतरतातुरा ।
मुक्तकेशी (७०) छिन्नजटा जटाजूटविलासिनी ॥ १७ ॥
सर्पराजयुता-भीमा स(र्व?र्प)राजोपरि-स्थिता ।
श्मशानस्था महानन्दिस्तुता संदीप्तलोचना ॥ १८ ॥
शवासनरता नन्दा सिद्धचारणसेविता (८०) ।
बलिदानप्रिया गर्भा भूर्भुवःस्वःस्वरूपिणी ॥ १९ ॥
गायत्री चैव सावित्री महानीलसरस्वती ।
लक्ष्मीर्लक्षणसंयुक्ता सर्वलक्षणलक्षिता ॥ २० ॥
व्याघ्रचर्मावृता (९०) मेध्या त्रिवलीवलयाञ्चिता ।

गन्धर्वैः संस्तुता सा हि तथा चेन्दा महापरा ॥ २१ ॥
पवित्रा परमा माया महामाया महोदया (१००) ।
इति ते कथितं दिव्यं शतं नाम्नां महेश्वरि ॥ २२ ॥
यः पठेत् प्रातरुत्थाय स तु विद्यानिधिर्भवेत् ।
इह लोके सुखं भुक्त्वा देवीसायुज्यमाप्नुयात् ॥ २३ ॥
तस्य वश्या भवन्त्येते सिद्धौघाः सचराचराः ।
खेचरा भूचराश्चैव तथा स्वर्गचराश्च ये ॥ २४ ॥
ते सर्वे वशमायान्ति साधकस्य हि नान्यथा ।
नाम्नां वरं महेशानि परित्यज्य सहस्रकम् ॥ २५ ॥
पठितव्यं शतं देवि चतुर्वर्गफलप्रदम् ।
अज्ञात्वा परमेशानि नाम्नां शतं महेश्वरि ॥ २६ ॥
भजते यो महाकालीं सिद्धिर्नास्ति कलौ युगे ।
प्रपठेत् प्रयतो भक्त्या तस्य पुण्यफलं शृणु ॥ २७ ॥
लक्षवर्षसहस्रस्य कालीपूजाफलं भवेत् ।
बहुना किमिहोक्तेन वाञ्छितार्थी भविष्यति ॥ २८ ॥



इति श्रीबृहन्नीलतन्त्रे भैरवपार्वतीसंवादे ( कालीशतनाम-निरूपणं ) त्रयोविंशः पटलः ॥ २३ ॥

अथ

## चतुर्विंशः पटलः ।



श्रीदेव्युवाच ।

देवदेव महादेव सृष्टिस्थित्यन्तकारक ।
यदुक्तमन्नदाकल्पे तद्वदस्व समाहितः ॥ १ ॥
अन्नदायाः परं मन्त्रं विशेषं कथयामि ते ।
इति मे कथितं भद्र तद्वदस्व समाहितः ॥ २ ॥

श्रीभैरव उवाच ।

यथा काली तथा नीला तथा चैवान्नदा शिवे ।
एतासां मन्त्रमेतस्मिन् कथितं परमेश्वरि ॥ ३ ॥
एका मूर्तिस्त्रिधा भूत्वा जगतां हितकारिणी ।
अन्नदायाः परं कल्पं कथितं तव सुन्दरि ॥ ४ ॥
मन्त्रराजं महादेवि शृणुष्वैकमनाः प्रिये ।
* जृम्भणान्तं त्यक्तपार्श्वं यात्रावारणरोहकम् ॥ ५ ॥
वामाक्षिसंयुतं देवि बिन्दुसंयुतमुत्तमम् ।
प्रथमं वीजमेतद्धि कथितं परमेश्वरि ॥ ६ ॥

---

* अन्नवर्णं महादेवि माहिकारसमन्वितम् । न्नं वर्णं चैव मे देहि स्वराद्येन विभूषितम् ॥
अन्नाधिलोहितं देवि तये-पदसमन्वितम् । ममान्नं-पदमीशानि प्रदापय-पदं ततः ॥
इति तन्त्रान्तरोक्तो मन्त्रः ॥

ततश्च लोहितं देवि स्वराद्येन विभूषितम् ।
अन्नवर्णं महादेवि मकारैकारसंयुतम् ॥ ७ ॥
नान्तवर्णं महादेवि स्वराद्येन विभूषितम् ।
ततश्च परमेशानि त्रिपदं सर्वगोपनम् ॥ ८ ॥
मन्त्रं गुप्तं महेशानि वह्निजायावधिस्थितम् ।
मन्त्रमेतन्महेशानि हठात् सिद्धिप्रदायकम् ॥ ९ ॥
ध्यानपूजादिकं सर्वं कथितं पूर्वकल्पके ।
शतनाम प्रवक्ष्यामि सर्वसारस्वतप्रदम् ॥ १० ॥
विना येन महादेवीमन्नदां भजते नरः ।
शतवर्षसहस्रेण तस्य सिद्धिर्न जायते ॥ ११ ॥
तस्मात् सर्वप्रयत्नेन सावधानावधारय ।
नाम्नां सहस्रं कथितं परमं तव सुन्दरि ॥ १२ ॥
इदानीं शृणु देवेशि अन्नदाशतनामकम् ।
यस्मात् परतरं नास्ति तन्त्रमध्ये महेश्वरि ॥ १३ ॥
अन्नदा परमा माया महादेवी शिवप्रिया ।
भवानी जगतामाद्या प्राणदा प्राणवल्लभा ॥ १४ ॥
जगज्जीवनयी (१०) गौरी त्रयी वेदमयी परा ।
काशीपुरनिवासा च काशीपुरविनाशिनी ॥ १५ ॥
कैलासनिलया कान्ती कल्पज्ञा कल्पदा (२०) शुभा ।
महादेवप्रपूज्या च महादेवरतातुरा ॥ १६ ॥
पायसान्नप्रिया देवी पीनोन्नतपयोधरा ।
त्रिवलीवलयोपेता नयनोत्तमसत्तमा ॥ १७ ॥
अन्नपात्रधृतानन्ता (३०) अन्नवेषनतत्परा ।
गङ्गा गया विशालाक्षी विशालरूपयौवना ॥ १८ ॥

मदोन्मत्ता स्वरूपाङ्गी पूर्णचन्द्रनिभानना ।
शिवप्राणा शिवरता (४०) सदाशिवमहाधना ॥ १९ ॥
महादेवप्रिया साध्वी सती कामालसा प्रिया ।
कोमलाङ्गी कामकला कला काष्ठा (५०) यशस्विनी ॥ २० ॥
प्रफुल्लपद्मवदना तथा पद्मालया शिवा ।
भवानी भवनप्रीता पद्मासनसमाश्रया ॥ २१ ॥
वेष्टिता सिद्धगन्धर्वैः संस्तुता ऋषिभिस्तथा ।
शिवेन सह संविष्टा (६०) शिवक्रीडनतत्परा ॥ २२ ॥
युवती यौवनप्रीता नित्ययौवनतत्परा ।
सदा षोडशवर्षीया सदाशिवमनोरमा ॥ २३ ॥
चारुरूपधरा चारुवक्त्रा चारुपराक्रमा ।
चार्वङ्गी (७०) कनकाङ्गी च कनकोपरि-संस्थिता ॥ २४ ॥
अन्नपूर्णा सदापूर्णा भूषणा स्वर्णकङ्कणा ।
भक्तप्राणा भक्तरता भक्तभोजनतत्परा ॥ २५ ॥
आज्यप्रिया (८०) विरूपाक्षी काकपक्षधरा शुभा ।
शुभदा शोभना शुद्धा निष्कला परमागतिः ॥ २६ ॥
दीनप्रिया दीनरता (९०) दीनभोजनतत्परा ।
साधकप्रेमसंपन्ना साधकाभीतिदायिनी ॥ २७ ॥
साधकैः सह संविष्टा साधकप्रेमतोषिता ।
साधकानन्ददात्री च साधकप्रेमगोचरा ॥ २८ ॥
जगद्धात्री जगत्त्रात्री जगतां जयकारिणी (१००) ।
इति ते कथितं दिव्यमन्नपूर्णाशतं शुभम् ॥ २९ ॥
यः पठेत् प्रातरुत्थाय स भवेत् परमेश्वरः ।
दरिद्रो लभते देवि सर्वसंपत्तिमेव च ॥ ३० ॥

अरोगी जायते सुभ्रु ! सर्वशास्त्रार्थविद्भवेत् ।
अन्नचिन्ता तस्य वंशे न जायते सुरेश्वरि ॥ ३१ ॥
स भवेत् परमेशानि त्रैलोक्यविजयी प्रभुः ।
वन्ध्यापि लभते पुत्रं कन्या विन्दति सत्पतिम् ॥ ३२ ॥
पठनाद्धारणाद् वापि नरो सर्वमयो भवेत् ।
गुह्याद् गुह्यतरं स्तोत्रं सर्वतन्त्रेषु गोपितम् ॥ ३३ ॥
तव स्नेहाद् वरारोहे प्रकाशितमिदं पुरः ।
न प्रकाश्यं महादेवि न प्रकाश्यं कदाचन ॥ ३४ ॥
मङ्गलाय महेशानि प्रकाशमुपपादय ।
व्यासादयो वशिष्ठाद्याः सर्वे च तदुपासकाः ॥ ३५ ॥
एकान्नपूर्णा देवेशी रूपभेदादनेकधा ।
काली तारा महाविद्या चान्नदा परमेश्वरी ॥ ३६ ॥
एता विद्या महादेवि सिद्धविद्याः कलौ युगे ।
अनेकजन्मसौभाग्याद् यद्येताः परमेश्वरि ॥ ३७ ॥
प्राप्नुवन्ति वरारोहे तेषां पुण्यफलं शृणु ।
यदि भाग्यवशेनैव एतासां सदुपासकः ॥ ३८ ॥
स कविः सच विज्ञानी सच साधकसत्तमः ।
एतन्मन्त्रग्रहादेव सिद्धो भवति मानवः ॥ ३९ ॥
एतन्मन्त्रं समादाय धर्मकामार्थमुक्तिषु ।
नासाध्यं मेनिरे देवि साधकाः वीतमत्सराः ॥ ४० ॥
ऐश्वर्येण महादेवि कुबेर इव जायते ।
य एताः पूजयेन्नित्यं प्रत्यहं भक्तिभावतः ॥ ४१ ॥
तस्यैवाज्ञाकराः सर्वे सिद्धयोऽष्टौ भवन्ति हि ।
तस्यैव धनसंपत्तिं दृष्ट्वैव परमेश्वरि ॥ ४२ ॥

इन्द्रोऽपि परमेशानि तिरस्कृत इवापरः ।
तस्यैव जननी धन्या पिता तस्य सुरोत्तमः ॥ ४३ ॥
संप्रदायविदां वक्त्राद् य एता वेत्ति तत्त्वतः ।
एतासां ज्ञानमात्रेण कुलकोटीः समुद्धरेत् ॥ ४४ ॥
नन्दन्ति पितरः सर्वे गाथां गायन्ति ते मुदा ।
अपि चास्मत्कुले कश्चित् कुलज्ञानी भविष्यति ॥ ४५ ॥
एष्टव्या बहवः पुत्रा यद्यप्येकः कुलं वसेत् ।
किं गयापिण्डदानेन किं काशीगमनेन च ॥ ४६ ॥
यदि भाग्यवशेनैव कालीं सरस्वतीं शिवे ।
अन्नपूर्णां महादेवीं पूजयति गृहाङ्गने ॥ ४७ ॥
स ब्राह्मणः स वेदज्ञः स वशी सच साधकः ।
स तीर्थवासी पीठानां चतुर्थाश्रमिणो यथा ॥ ४८ ॥
स संन्यासी महायोगी जीवन्मुक्तो भविष्यति ।
पापं पुण्यं महादेवि तस्य नास्ति वरानने ॥ ४९ ॥
हिंसादिजनितो दोषो नास्त्येव वरवर्णिनि ।
अपि चेत् त्वत्समा नारी मत्समः पुरुषो यदि ॥ ५० ॥
एतासां सिद्धविद्यानां समो मन्त्रोऽस्ति वै तदा ।
मन्त्रं संत्यज्य चान्येषां एतन्मन्त्रं समाश्रयेत् ॥ ५१ ॥
कोटीनां तिसृणां मध्ये तन्त्रसारं प्रकाशितम् ।
यदुक्तं परमेशानि तत्कर्तव्यमहर्निशम् ॥ ५२ ॥
एतत् तन्त्रं महेशानि यद्गृहे तिष्ठति प्रिये ।
मत्सांनिध्यं महेशानि तत्र तिष्ठति निश्चितम् ॥ ५३ ॥
सर्वविद्या भवत्येव संशयो नास्ति कश्चन ।
ऐश्वर्यं रोगराहित्यं सदा भवति तद्गृहे ॥ ५४ ॥

अहं शिवः परात्मा च विमाता तु महेश्वरी ।
सर्वमेव महेशानि कथितं दुर्लभं शिवे ॥ ५५ ॥



इति श्रीबृहन्नीलतन्त्रे सर्वतन्त्रोत्तमोत्तमे भैरवभैरवीसंवादे (अन्नदा-मन्त्रोद्धार-शतनाम-तन्त्रमाहात्म्यनिरूपणं) चतुर्विंशः पटलः ॥२४॥

समाप्तं चेदं श्रीबृहन्नीलतन्त्रम् ।

पञ्चाङ्कनन्दशशि (१९९५) संमितवैक्रमेऽब्दे
श्रीनीलतन्त्रकमशेषसुतन्त्रसारम् ।
श्रीभैरवागममहाब्धिमहार्घरत्नं
संस्कृत्य शुद्धिपदपाठसुमीलनाद्यैः ॥ १ ॥
प्राचीनहस्तलिखितानपि जीर्णभूयो-
ग्रन्थान् प्रयत्नवशतोऽनुविधृत्य लब्धान् ।
औदार्यवीर्यसुभगत्वगुणस्फुरच्छ्री-
राजाधिराज-हरिसिंहनृपानुशिष्ट्या ॥ २ ॥
उच्चैः पदाधिकृतिभाजन-काकजाति-
श्रीरामचन्द्रविबुधाधिकृतिप्रबन्धे ।
संपाद्य शास्त्रि-शिवनाथसहायभाजा
प्राकाशि शास्त्रिहरभट्ट-विपश्चितेदम् ॥ ३ ॥